श्रीगणेशायनमः ॥ प्राणंकृशोदरीणांराधानयनान्तसर्वस्वम् तेजस्तमालनीलंशरणागतवज्रपंञ्जरम्वन्दे ॥१॥स्वप्रकाशचिदानंद
मयायपरमात्मने अविद्यानिविडध्वान्तभास्करायनमोन्वहम् ॥२॥ग्रन्थाः काव्यकृतांहितायविहितायेसन्तपूर्वैर्मयातेतर्कार्णवसं
प्लवव्यसनिभिःशक्याः परंवेदितुम् इत्यालोच्यहृदामदालसवधूपादारविन्दक्वणन्मञ्जीरध्वनिमञ्जुलोयमधुनाप्रस्तूयतेप्रक्र
मः॥३॥आसीत्प्रत्यर्थिपृथ्वीरमणकमलिनीवृन्दहेमन्तमासः कीर्तिभ्राजत्सुशर्मान्वयकुमुदवनीयामिनीजीवनाथः राजद्राजन्यरा
जीमुकुटमणिगणप्रोल्लसत्पादपीठः प्रोद्यत्साम्राज्यलक्ष्मीशिथिलितनहुषोरामचन्द्रोवनीन्द्रः॥४॥मित्राणिप्रतिपालयंस्त्रिजगतीं
कीर्तीन्दुनाह्लादयन् शत्रूणांहृदयंप्रतापदहनैरात्रिंदिवंज्वालयन् सर्वस्वेनकृतार्थयन्द्विजगणान्देवान्मखैस्तोषयन्नेषप्रौढमनाश्चि
रायबुभुजेसप्तार्णवांमेदिनीम् ॥५॥सूत्रामोद्दामदिल्लीपरिवृढविलसत्काविलक्षोणिभर्त्रोः प्रक्रान्तेप्रौढयुद्धेसमदलयदसौकोटिशो
वैरिवीरान् पश्चान्मासास्थिमेदः कलुषितवसुधांप्रेक्ष्यतांश्चाकलय्यद्यांपातान्वैरिवर्गान्दिवमपिसहसाजेतुकामोजगाम॥६॥क्षीरा
म्भोधेः शशीवश्रुतिरिवबदनाद्वेधसोरामचन्द्रादस्माद्दृप्तप्रतापः समजनिसुमनाधर्मचन्द्रोनरेन्द्रः यस्याद्यापिप्रसन्नस्मितसुभग

मुखाः स्विद्यदच्छकपोलरोमाञ्चस्तंभभव्यास्त्रिदशयुवतयो हन्त गायन्ति कीर्तीः ॥ ७॥ निःक्रान्तं सदनाद्दूरे स्मिभगवानम्भोजिनीवल्ल
भस्तेवाताः परिशीलिताः कमलिनीसौरभ्यमेदस्विनः विश्रान्तगिरिकाननेषु निविडच्छायेषु भाग्योदयादित्थं स्मेरमुखाः स्तुवन्ति विप
दंपट्टैरिवामभुवः ॥ ८॥ प्रत्यर्थिभूपतिपरिग्रहराज्यलक्ष्मीधम्मिल्लमाल्यसुरभीकृतपाणिपद्मः तस्मादजायत समस्तगुणाभिरामो मा
णिक्यचन्द्र इति राजकचक्रशक्रः ॥ ९॥ काव्यालंकारपारंगममतिरखिलक्ष्माभृतां चक्रवर्ती सर्वेषामस्तु कामेमतिरतिनिपुणेत्याशयेसन्नि
वेश्य वेदान्तन्यायविद्यापरिचयचतुरं केशवं सन्नियुज्य श्रीमन्माणिक्यचन्द्रः क्षितिपतितिलको ग्रंथमेनं विधत्ते ॥ १०॥ बहुदोषोपि
विदोषः क्रियते सुजनेन वाण इव हरिणा गुणवदपि निर्गुणी यति दुर्जनतो मूषिकात इव पुस्तम् ॥ ११ परो द्वेगे परानन्दे खलसज्जन
योर्द्वयोः स्वभाव एव शरणम्विषपीयूषयोरिव ॥ १२॥ अलंकारविद्यासूत्रकारो भगवान् शौद्धोदनिः परमकारुणिकः स्वशास्त्रे प्रवर्त
यिष्यन्प्रथमं काव्यस्वरूपमाह ॥ काव्यं रसादिमद्वाक्यं श्रुतं सुखविशेषकृत् आदिपदेनालंकारपरिग्रहः ॥ तथाच ॥ तदुभयान्यतर
वत्वं वा लक्षणम् अन्यतरवत्वं च तदन्यान्यत्वम् सुखविशेषसाधनं वा लक्षणम् समुदायार्थशून्येपि तदुभयमस्त्येवेति रुद्रः अद

अ०शे० ष्टद्वारातद्धेतुशब्दे ऽतिव्याप्तेराह श्रुतमितिसदितिशेषः सुखेवैजात्यंसर्वानुभवसिद्धमेव॥केचित्तु॥तददोषौशब्दार्थौसगुणावन
२ लंकृतीपुनःक्वापीत्याहुः रसप्रतिपत्तिगुणद्वारासुखविशेषसाधनंकाव्यमित्यपरे केचित्तुपदावलीकाव्यम् नतुनिर्दोषगुणवदा
दिकाव्यदोषाणामपरिगणनापत्तेः नचदोषाभावघटितकाव्यत्वज्ञानार्थमेवप्रतियोगिपरिगणनमितिवाच्यम् तवैतत्काव्यंदुष्ट
मित्यनुद्भावनापत्तेः इदंकाव्यमेवनेत्यभिधानस्यैवौचितत्वादित्याहुः तन्नतवापिहेतुराभासइतिवदुपपत्तेः व्याप्तिविशिष्टपक्षध
र्मस्यैवहेतुत्वात्नचहेतुत्वेनाभिमतइतिवाच्यम्तुल्यत्वादिति वस्तुतस्तुकाव्यंपृथगेवयत्रदोषेगुणादिचिन्तानहि दुष्टंशरीरंशरीर
मेवनभवतीत्यन्ये कीर्त्यादिरूपफलसाधनतातुविशिष्टस्य॥यदाह॥ साधुशब्दार्थसन्दर्भंगुणालंकारभूषितं स्फुटरीतिरसोपेतंका
व्यंकुर्वीतकीर्तये॥आहुश्च॥निर्दोषंगुणवत्काव्यमलंकारैरलङ्कृतम् रसान्वितंकविः कुर्वन्प्रीतिंकीर्तिंचविंदति प्रसङ्गोपयिकंफल
माह हितायसुकविःकुर्यात् सुकवेरेवहितमन्यस्यतुप्रतिकूलमितितन्न॥तदुक्तंच॥गौर्गौःकामदुघासम्यक्प्रयुक्तास्मर्यते
बुधैः दुःप्रयुक्ताःपुनर्गोत्वंप्रयोक्तुस्सैवसंशति श्लाघ्यःपामरपरिषदिकवयतिदोलीककर्तापि यस्मैस्पृहयतिविद्वांस्तत्का

ंकाव्यमित्याहुः अर्थैःकृतार्थयंत्येके घटनापटवःपरे उभयत्रप्रवीणायेतएवकवयोमताः॥ हितमाह श्रीपादः॥ लाभःपूजा
ख्यातिर्धर्मः कामश्चमोक्षश्चइष्टानिष्टप्राप्तित्यागौज्ञानंफलानिकाव्यस्यदृष्टेतिगोवृषन्यायात्॥ आहुश्च॥ काव्यंयशसेर्थकृतेव्यव
हारविदेशिवेतरक्षतये सद्यःपरनिर्वृतयेकान्तासंमिततयोपदेशयुजे॥ वृद्धास्तु॥ श्रोतॄणांद्रागमहानंदः सःस्वस्मिन्नाभिमानिकः
तत्कालफलमेतावत्क्रमात्कीर्तिधनादिकं नन्वेवंसर्वःसुकविरेवस्यात् अतआहतद्धेतुः प्रतिभादिकम्॥ तदाह॥ प्रतिभाका
रणंतस्यव्युत्पत्तिस्तुविभूषणम् भृशोत्पत्तिकृदभ्यासः काव्यस्येषाव्यवस्थितिः व्युत्पत्तिर्नानातंत्रज्ञानम्॥ आहुश्च॥ शक्तिर्निपु
णतालोकशास्त्रकाव्याद्यवेक्षणात् काव्यज्ञशिक्षयाभ्यासइतिहेतुस्तदुद्भवे शक्तिः पुण्यविशेषः सएवप्रतिभेत्युच्यते व्युत्प
त्तिः शक्तिरभ्यासस्त्रितयंकाव्यसाधनमित्यपि॥ श्रीपादस्तु॥ परिशीलितकाव्यवर्त्मनाकविसंसर्गविशुद्धचेतसा परिभावयता
मनुसरणंकवितापाणितलेनिषीदतिनैसर्गिकीचप्रतिभाश्रुतंचबहुनिर्मलम् अमन्दश्चाभियोगोऽस्याः कारणंकाव्यसंपदः
मनःप्रसत्तिः प्रतिभाप्रातःकालेभियोगिता अनेकशास्त्रदर्शित्वमित्यर्थालोकहेतवः द्वित्रिकोषपरिज्ञानंद्वित्रिव्याकर

णज्ञता छन्दोविद्याप्रवीणत्वंकाव्येवश्यमपेक्षते आदिपदात्प्रकारपरिज्ञानम् तथाहिसाखल्वेषाभारतीसुरसरिदिवसहस्रमु
स्यपिसंक्षेपेणचतुर्द्धाप्रवर्तते तदाहुः संस्कृतंप्राकृतंचैवपैशाचीमागधीतथा विद्याश्चतस्रएवैताः संक्षेपात्काव्यवर्त्मनः दे
वाद्याः संस्कृतंप्राहुः प्राकृतंकिन्नरादयः पैशाचींचपिशाचाद्यामागधींहीनजातयः चतसृष्वपिमूर्द्धन्यंसंस्कृतंमुनयोविदुः गद्यं
पद्यंचमिश्रंचतत्त्रिधैवव्यवस्थितम् गद्यमुत्कलिकाप्रायंपद्यगंधीतिचद्विधा तत्रापिपद्यंतद्पिवृत्तकंवर्णमात्रयोः समवैषम्य
भेदेनतद्नंत्यायकल्पते दण्डिनस्तु ॥ तदेतद्वाङ्मयंभूयः संस्कृतंप्राकृतंतथा अपभ्रंशश्चमिश्रंचेत्याहुरार्याश्चतुर्विधम् प्राकृ
तंतज्जतत्तुल्यदेश्यादिकमनेकधा अपभ्रंशश्चयच्छुद्धंतत्तद्देशेषुभाषितम् संस्कृतंसर्गबंधादिप्राकृतंस्कन्धकादिकम् आसा
रादित्वपभ्रंशोनाटकादितुमिश्रकम् यथामतियथाशक्तियथौचित्यंयथारति कवेः पात्रस्यचैतासांप्रयोगउपपद्यते ॥ इत्यलंकारशे
खरेउपक्रमरत्नेकाव्यस्वरूपफलकारणमरीचिः ॥ शरीरिकल्पस्यकाव्यस्यरूपान्तरमाह ॥ रीतिरुक्तिस्तथामुद्रावृत्तिः काव्यस्य
जीवितम् त्रिविधस्यापिदोषास्तुत्याज्याः श्लाघ्याहृयेगुणाः अलङ्कारस्तुशोभायैरसआत्मापरेमनः हृयइतिशब्दार्थभेदात्त्रितयान्वयि

परेरसदोषाभावानुकूलवर्णादयः तत्र तत्तद्रसोपकारिण्यस्तत्तद्देशसमुद्भवाः पद्येषु रीतयो गौडी वैदर्भी मागधी तथा तदेतत्पल्लवय
न्ति॥ श्रीपादाः॥ गौडी समासभूयस्त्वाद्वैदर्भी च तदल्पतः अनयोः सङ्कीर्णस्तु मागधी सातिविस्तरा गौडीयैः प्रथमा मध्या वैदर्भैर्मैथि
लैस्तथा अन्यैस्तु चरमा रीतिः स्वभावादेव सेव्यते॥ तत्र गौडी यथा॥ उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुरक्रीडत्कोकिलकाक
लीकलकलैरुद्गीर्णकर्णज्वराः नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षणप्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः॥ वैद
र्भी यथा॥ मनीषिताः सन्ति गृहेषु देवतास्तपः क्व वत्से क्व च तावकं वपुः पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः॥ मा
गधी यथा॥ पाणौ पद्मधिया मधूककुसुमभ्रान्त्या पुनर्गण्डयोर्नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुध्याधरे लीयन्ते कबरीषु बान्धवजन
व्यामोहजातस्पृहा दुर्वारा मधुपाः कियन्ति तरुणि स्थानानि रक्षिष्यसि इयं च बहुधा विस्तृतमन्यत्र॥ भोजराजस्तु॥ शस्ता विदग्धगोष्ठीषु वै
दर्भी रीतिरुत्तमा मागधी मध्यमा गौडी गौडस्त्रीकलहायते॥ यदाह॥ ब्रह्मन्विज्ञापयामि त्वां स्वाधिकारजिहासया॥ गौडस्त्यजतु वा गा
थामन्या वास्तु सरस्वती॥ उक्तिं विभजते॥ लोकच्छेकार्भकोन्मत्तभेदादुक्तिश्चतुर्विधा॥ तत्र लोकोक्ति॥ शापान्तो मे भुजगशयनादुत्थि

अ॰शे॰ तेशार्ङ्गपाणौशेषान्मासान्गमयचतुरोलोचनेमीलयित्वा पश्चादावांविरहगुणितं तमात्माभिलाषंनिर्वेक्ष्यावः परिणतशरच्चन्द्रि
४ कासुक्षपासु ॥ छेकोविदग्धस्तस्योक्तिर्यथा ॥ योतिदीर्घासिताक्षस्यविलासचलितभ्रुवः कान्तामुखस्यावशगस्तस्मैनृपशवेनमः
॥अत्रनृपशवइति॥ अर्भकोक्तिर्यथा॥ सकिंस्वर्गतरुः कोपियस्यपुष्पंनिशाकरः मातःस्तेकीदृशावृक्षायेषांमुक्ताफलंफल
म् अत्रपुष्पंनिशाकरः फलंमुक्ताफलमिति ॥उन्मत्तोक्तिर्यथा॥ क्वाकार्यंशशलक्ष्मणः क्वचकुलंभूयोपिदृश्येतसादोषाणांप्रशमाय
नः श्रुतमहोकोपेपिकान्तंमुखम् किंवक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेपिसादुर्लभाचेतः स्वास्थ्यमुपैहिकः खलुयुवाधन्योधरंधास्य
ति अत्रविरहोन्मत्तस्यै वमभिधानं विन्यासविशेषवशाद्यत्राभिप्रायविशेषलाभेनमुदोहर्षस्योत्पत्तिः सामुद्रा ॥तामिदानींविभजते
मुद्रापदस्यवाक्यस्यविभक्तेर्वचनस्यच ॥तत्रपदमुद्रायथा॥ निर्माल्यंनयनश्रियः कुवलयंवक्त्रस्यदासः शशीभ्रूयुग्मस्यसनाभिम
न्मथधनुर्ज्योत्स्नास्मितस्यांचलम् संगीतस्यचमत्तकोकिलरुतान्युच्छिष्टमेणीदृशः सर्वाकारमहोविधेः परिणतंविज्ञानशिल्पंचिरा
त् अत्रनिर्माल्यादिपदानांगौणवृत्त्याऽभिप्रायविशेषान्मुद्राप्रदायिता ॥वाक्यमुद्रायथा॥ रामेतटान्तवसतौकुशतल्पशायिन्यद्यापिना

मभवतोभगवन्ननास्या स्मृत्वातदेहिसगरंचभगीरथंचदृष्ट्वाथवाममधनुश्वशिलीमुखांश्च अत्रसगरंचभगीरथंचेत्यादिवाक्यस्यप्रा
गुपकाराभिप्रायेणदृष्ट्वायावदपकारसामर्थ्याभिप्रायेणनिवेशनान्मुत्प्रदायिता॥ विभक्तिमुद्रायथा॥ श्रियंप्रदुग्धेविपदोरुणद्धियशांसि
सूते॥ विनयंप्रमार्ष्टि संस्कारशौचेनपरंपुनीतेशुद्धाहिवृद्धिः किलकामधेनुः अत्रप्रदुग्धइत्यादितिङ्विभक्तीनांद्वयोर्द्विकर्मयोर्निवेश
नान्मंगल्यामंगल्या र्थकानामपिमंगल्यएवाभिप्रायवशाद्विभक्तिमुद्रा॥ वचनमुद्रायथा॥ विश्वंभराभगवतीभवतीमसूतरा
जाप्रजापतिसमोजनकः पिताते तेषांवधूस्त्वमसिनन्दिनिपार्थिवानां येषांगृहेषुसविताचगुरुर्वयंच अत्रवयमितिवचनेनसवितु
रहंमहानित्यभिप्रायाद्वचनमुद्रा प्रयोजनेयथेतासांरसमैत्रीचविस्तरः तथालंकारसर्वस्वेसप्रपंचमदर्शयम् इत्यलंकारशेखरउप
क्रमरत्नेरीत्यादिवहिरंगत्रयमरीचिः॥ अथवृत्तिंविभजते॥ पदानांवृत्तयस्तिस्रः तिस्रोवृत्तयः पदानांभवन्ति शक्तिर्लक्षणाव्यंजनाचे
तितत्रशक्तिरीश्वरेच्छायासंकेतइत्युच्यतेसापदेषुप्रसिद्धैव॥ साच॥ कोशव्याकरणाप्तोक्तिवाक्यशेषोपमादितः प्रसिद्धपदसंबन्धाद्व्यव
हाराच्चबुध्यते लक्षणाशक्यसम्बन्धः साचतात्पर्यानुपपत्त्यामुख्यार्थानुपपत्त्यावाप्रवर्तते॥ यथा॥ निर्माल्यंनयनश्रियइत्यादौनिर्माल्यदा

अ॰शे॰ सादिपदे॥तृतीयावृत्तिर्व्यंजनायथा॥निःशेषच्युतचंदनंस्तनतटंनिर्मृष्टरागोधरोनेत्रेदूरमनञ्जनेपुलकितातन्वीतवेयंतनुः मिथ्यावा
५ दिनिदूतिवांधवजनस्याज्ञातपीडागमेवापींस्नातुमितोगतासिनपुनस्तस्याधमस्यान्तिकम् अत्राधमपदेनरंतुंगतासीतिव्यज्यते ननुर
विरस्तंगतइत्यादौतान्येवपदानिकथंश्रोतॄणांविचित्रवुद्धीरुत्पादयंतीत्यतआह विचित्रसहकारिणाम् तदेवहिपदंस्वरससमभिव्या
हारप्रकरणतात्पर्य्यज्ञानादिरूपसहकारिभेदात्तत्तद्धियमुत्पादयति दण्ड इवगवाभ्यजनघटौ ननुशक्यादिकमानुपूर्वीविशेषवि
शिष्टवर्णसमुदायेतत्कथमेकदेशस्यवोधकता॥अतआह॥स्वभाववैचित्रजुषाम् विचित्रस्वभावानिखलुपदानिभवंति क्वचिदे
कदेशस्याद्यस्यवोधकता यथाभीमसेनवलदेवादिपदादौ॥क्वचिच्चरमस्ययथा॥मतंगजवसुंधराधराधरपदादौ साचतत्तत्पदस्म
रणेनप्रकारान्तरेणचेत्यन्यदेतत् किंचकर्णावतंसपदवत् शक्यतावच्छेदकस्यपृथगुपादानेनापिनपौनरुक्त्यंभवतियथा करिवृं
हितमयूरकेकादौक्वचित्॥शक्यस्यापियथा॥उदयाचलकारागृहादौ उदयपदस्यपूर्वाचलेकारापदस्यवन्दिगृहेशक्यत्वात् किंच प
रस्परविरुद्धतयातिरस्कृततृतीयकोटिकमिवान्यतरप्रतिक्षेपेपरस्यैवलाभंजनयति॥यथा॥शीतेतरानुसकराहिमांशोः इत्यादौ अपं

सु लानांधुरि कीर्त्तनीयास्तनन्दिनीस्तन्यमनिन्दितात्मा इत्यादौ प्रकर्षलाभवदित्यवधेयम् किंचित्पदमनपेक्ष्यरूढिकम्॥ यथा॥ सिंहाद
वापद्विपदंनृसिंहइत्यादौ किंचिद्यानपेक्ष्ययौगिकम्॥ यथा॥ क्षीराम्भोधेरित्यादौ अन्यथाः नन्वयापत्तिः किंचवामनयनावामोरूरिति
भवति नतुवामवदनावामपाणिरिति सर्वेचेदंक्वचिदेकपदे अतउक्तंस्वभावेति तत्किंयत्व्यञ्जनापिपदमात्रवृत्तिरेवनेत्यतआह॥
व्यञ्जनार्थत्रयेपिच शक्यलक्ष्यव्यङ्ग्यात्मकइत्यर्थः॥ शक्यार्थस्यव्यञ्जकता यथा॥ अवलोकयनिष्पन्दो बिशिनीपत्रे बकोभाति निर्म
लमरकतभाजनोपरिस्थितोविमलशंखशुक्तिरिव अत्रनिष्पन्दशब्दस्यार्थेनक्रियाविरहेणवकगतमाश्वस्तत्वंव्यज्यते॥ लक्ष्यार्थस्यय
था॥ मुखंविकसितस्मितंवशितवक्रिमप्रेक्षितंसमुच्छलितविभ्रमागतिरपास्तसंस्थामतिः उरोमुकुलितस्तनंजघनमंसबंधोद्धुरंवते
न्दुवदनातनौतरुणिमोद्गमोमोदते अत्रविकासः पुष्पधर्मोमुखेनुपपन्नइतिलक्षितेनप्रसृतत्वेनलोकोत्तररमणीयतात्मकातिशयो
व्यज्यते॥ एवमग्रेपिव्यंग्यार्थस्ययथा॥ अवलोकयइत्यादावेवव्यंग्येनाश्वस्तत्वेनदेशस्यसंकेतयोग्यत्वंव्यज्यते॥ त्रिविधस्यापीति॥ उत्त
ममध्यमाधमात्मकस्य तत्रवाच्यनिरूपितव्यंग्यप्रकर्षाधारत्वमुत्तमत्वम्॥ यथा॥ निःशेषच्युतचन्दनमित्यादौ वाच्यापेक्षयाव्यंग्यार्थे

 एवमुक्तिरिति चमत्कारविशेषमारोहति वाच्यनिरूपितव्यंग्यप्रकर्षानाधारत्वमधमत्वम्॥ यथा॥ ग्रामतरुणं तरुण्या नववञ्जुलमंजरी
 सनाथकरं पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया अत्र वञ्जुलकुञ्जे दत्तसंकेता तरुणी न गतेति व्यज्यते तच्च गुणीभूतं तदपेक्षया
वाच्यस्यैव चमत्कारित्वात् चमत्कृतिहेतुव्यंग्यरहितत्वमधमत्वम्॥ यथा॥ वन्दामहे महेशानचण्डकोदण्डखण्डनम् जानकीहृदयानं
दवन्दनं रघुनंदनम् अत्र व्यंग्यः कोप्यर्थस्तादृशो नास्ति अत्र सर्वत्र वक्तुरेव तात्पर्यनियामकम् तज्ज्ञानमेव वोधोपयोगि तदभावादधम
मित्युच्यते प्रपञ्चितं चेदं मयैव वाक्यरत्ने ननु व्यंजनावृत्त्यंतरमित्यत्र किं मानमिति॥ उच्यते॥ भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः
कृतशिलीमुखसंग्रहस्य यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोभूत् अत्र प्रकरणेन भद्रात्मन इत्यादिपदानां राजित
दन्वययोग्ये चार्थेभिधानियन्त्रणेपि गजस्य तदन्वययोग्यस्य चार्थस्य व्यञ्जनयैव प्रतीतिः वस्तुतस्तु अद्यारभ्य चिरं साधो निःशंकमिह संच
र रेवाकुंजे मृगेंद्रेण स दुष्टश्वा व्याघातितः अत्र भिक्षुकं प्रत्येवं वदंत्याः प्रतिवेशिनं प्रति निःशंकरत्यभिधाने स्फुटं इति किंच रेवाकुंजस्य रतस्था
नत्वं लभ्यते सिंहबुद्ध्या परेण न गन्तव्यम् सिंहस्तु वस्तुगत्या नास्त्येव तदेतद्व्यञ्जनां विना प्रकारांतरेण लब्धमित्याशंकैव नास्तीति॥ इत्य

लेकारशेखरेउपक्रमरत्नेवृत्तिमरीचिः॥दोषःसर्वात्मनात्याज्योरसहानिकरोहिसः अन्योगुणोस्तुवामास्तुमहान्निर्दोषतागुणः॥दण्डिनात
स्वल्पमपिनोपेक्ष्यंकाव्येदुष्टंकथंचन स्याद्वपुस्सुन्दरमपिश्वित्रेणैकेनदुर्भगम् दोषत्वंचरसोत्पत्तिप्रतिबन्धकत्वम् रसकारणीभूताभाव
प्रतियोगियथार्थज्ञानविषयत्वमितियावत्॥अत्रप्रथमंपददोषानाह॥कष्टाप्रयुक्तसंदिग्धव्यर्थाश्लीलाप्रतीतकाः असाध्ववाचकौदोषाः
पदेष्टावेवभाषिताः॥कष्टंश्रुतिकटु यथा॥बर्हिनिर्ह्रादनार्हेस्मिन्कालेजीमूतमालिनि आलिङ्गितस्सतन्वङ्ग्याकार्तार्थ्यंलभताचिरात् अत्रब
र्हिनिर्ह्रादकार्तार्थ्यादिशब्दाः॥अप्रयुक्तम्॥तथाम्नातमपिकविभिर्नाद्दतम्॥यथा॥यतोऽयंदारुणाचारोनहन्तिसुरनिम्नगाम् अतोमन्ये
दैवतोस्यपिशाचोराक्षसोऽथवा अत्रहंतीतिगमनेदैवतशब्दःपुंसिकविभिर्नप्रयुक्तः॥संदिग्धम्॥सन्देहजनकम्॥यथा॥अपिधानेनहेवत्स
किमर्थमिहवर्तसे आरादेवास्तिसप्रायोपतस्तेभयमुत्थितम्॥अत्रापिधानाराच्छब्दौ॥व्यर्थम्॥प्रकृतार्थानुपयुक्तम्॥यथा॥बिभर्ति
यश्चरेहार्द्धेप्रियामिन्दुंहिमूर्द्धनि सदेवःखलुत्वान्तुपुनातुमदनान्तकः अत्रचहिथैखलुतुशब्दाः अश्लीलमौज्ज्वल्याभाववत् तदपि
त्रिविधम् अमंगलव्रीडाजुगुप्साभेदात्॥क्रमेणोदाहरणम्॥विनाशान्मारुतेस्तस्यसुमरुत्साधानोपिसन् नासाग्रेणससुग्रीवोवायुंत्यज

सिकेवलम् अत्रविनाशसाधनवायुशब्दाः॥अप्रतीतम्॥ स्वशास्त्रमात्रप्रसिद्धम्॥ यथा॥त्रुटौविश्रान्तिरित्येकेपीलावस्तीतिचापरे
त्वन्मध्यमाणिमातन्विनकेनापिविभाव्यते॥अत्रत्रुटिपीलुशब्दौ॥असाधुअनुशासनविरुद्धम्॥यथा॥शातोदरिकथंकारंमानमेत
च्चिकीर्षसि मानिनीमानदलनोविजयत्येषचन्द्रमाः॥अत्रमानमेतद्विजयतीतिअवाचकम्॥प्रकृतार्थाशक्तम्॥यथा॥भूयोमन्त
द्विरदगमनांहारकेयूरयुक्तांपीनोत्तुङ्गस्तनभरनमन्मध्यभागाभिरामाम् स्मेरोदंचन्नवकिसलयस्पर्द्धिताम्राधरोष्ठींलक्ष्मीमक्षिस्फु
रितवदनामन्वहंसंस्मरामि अत्रलक्ष्मीपदमङ्गनायाःग्राम्यंत्ववाचकाश्लीलान्यतरान्तर्भावान्नपृथगिति॥इत्यलंकारशेखरेदोष
रत्नेपददोषमरीचिः॥अथेदानींसाधारणान्वाक्यदोषानाह न्यूनंविसंधिव्याकीर्णसमाप्तपुनरात्तकम् भग्नक्रमयतिछन्दोवाक्य
गर्भमरीतिमत् अविमृष्टविधेयांशंसमुदायार्थवर्जितम् विरुद्धमतिकृद्वाक्येदोषाद्वादशकीर्तिताः तत्रन्यूनमन्वयबोधप्रयोज
कपदशून्यम्॥यथा॥तथाभूतांदृष्ट्वानृपसदसिपांचालतनयांवनेव्याधैस्सार्द्धंसुचिरमुषितंवल्कलधरैः विराटस्यावासेस्थितम
नुचितारंभनिभृतंगुरुःखेदंखिन्नेभजतिम॑यिनाद्यापिकुरुषु अत्रस्थितमित्यनंतरमस्माभिरिति खिन्नइत्यस्मात्पूर्वमित्यमिति

वदातुमर्हति ॥ विसंधिः सन्धिविरहो विरुद्धसंधिश्च ॥ आद्योपि द्विविधः ॥ ऐच्छिकः प्रगृह्यादिनिबन्धनश्च ऐच्छिकस्सकृदपि दोषः मेघानि
लेन अमुना एतस्मिन्नद्रिकानने पादपा उत्तमा अथ्वाद्दृदानीमेव पातिताः ॥ चरमश्चतुर्विधः ॥ अश्लीलं कष्टं उत्वप्राप्तविसर्गौ लुप्तविसर्गश्च ॥ क्र
मेणोदाहरणानि ॥ वबुरिन्दीवरश्रेणिवान्धवायत्रवायवः मञ्जर्युद्गमगर्भासौ तवाल्पुर्वी विधूयते धीरो विनीतो निपुणो वराकारो नृपोऽत्रसः
यस्य भृत्या वलोत्सिक्ता भक्ता बुद्धिप्रभाविताः व्याकीर्णव्यवहितान्वयम् ॥ यथा ॥ मसृणचरणपातं गम्यतां भूः सदर्भा विरचय सिचयांतं मू
र्ध्नि घर्मः कठोरः तदिति जनकपुत्री लोचनैरश्रुपूर्णैः पथिपथिकवधूभिर्वीक्षिता शिक्षिता च ॥ अत्र तद्गम्यताम् ॥ तद्विरचयेत्यन्वये तदिति
व्यवहितम् ॥ समाप्तपुनरात्तकम् ॥ समाप्तौ प्रधानवाक्यार्थबोधे जाते पुनरुपात्तम् ॥ यथा ॥ निर्माल्यं नयनश्रियः द्दृत्पादो चिरादिति ॥ यथा च ॥
केङ्कारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवो झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरध्वनिः तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्ख
लत्कङ्कणक्वाणः प्रेमतनोतु वो नववयो लास्याय वेणुस्वनः अत्र वेणुस्वन इति ॥ भग्नक्रमं यत्रार्थः शब्दो वा क्रमेण नास्ति ॥ उभयं यथा ॥ तुरङ्ग
मथमातङ्गः प्रयच्छास्मै मदालसम् कान्तिप्रतापौ भवतः सूर्याचन्द्रमसोः समौ ॥ भग्नयतिर्यथा ॥ रामेतदन्तवसतौ कुशतल्पशायिन्यद्या

अ॰शे॰ पित्यादौ अत्रावश्यकोपदशेषयतिर्नास्ति॥भग्न छंदो यथा॥ततः परमोमित्युक्त्वा प्रतस्थेमुनिमण्डलम् भगवानपिसंप्राप्तः प्रथमोद्दिष्टमाश्र
८ मम् अत्रचतुर्थेगौरवेपञ्चमंलघुकर्तुमर्हति यत्राऽपर्य्यवसितवाक्यमध्येतदनपेक्षवाक्यान्तरमनुप्रविशतितद्वाक्यगर्भम्॥यथा॥योम्यो
पस्तेपुत्रः सोयंदशवदनलक्ष्मणेनमया रक्षिनंयदिशक्तिर्मृत्युवशंनीयतेविवशः॥अत्रतृतीयपादगर्भता॥अरीतिमत्॥यांरीतिमुपक्रम्य
प्रवृत्तंतद्भङ्गवत्॥यथा॥गाहन्तांमहिषानिपानसलिलंश्वङ्गैर्मुहुस्ताडितंछायावद्धकदम्बकंमृगकुलंरोमन्थमभ्यस्यतु विस्रब्धैः क्रियतां
वराहपतिभिर्मुस्ताक्षतिः पल्वलेविश्रामंलभतामिदंचशिथिलज्यावद्धमस्मद्धनुः अत्रतृतीयपादेनभिहितकर्त्रादरान्तद्भङ्गः॥अवि
मृष्टविधेयांशम्॥प्राधान्यानिर्दिष्टविधेयकम्॥यथा॥वपुर्विरूपाक्षमलक्ष्यजन्मतादिगम्बरत्वेननिवेदितंवसु वरेषुयद्बालमृगाक्षिमृ
ग्यतेतदस्तिकिंव्यस्तमपित्रिलोचने अत्रजन्मोद्दिश्यालक्ष्यकम्विधेयम् तच्चसमासप्रविष्टतयानप्राधान्येननिर्दिष्टम्॥समुदायार्थवर्जि
तंयथा॥जरद्गवः कम्बलपादुकाभ्यांद्वारिस्थितोगायतिमंगलानि तंब्राह्मणीपृच्छतिपुत्रकामाराजन्नुमायांलशुनस्यकोर्घः अथविरुद्ध
मतिकृत्कुवेरस्येवभगवान्भवानीरमणोहरः अकार्य्यमित्रमेकोसौवासुदेवः किरीटिनः अत्रभवानीरमणाकार्य्यमित्रशब्दौविरुद्धांमतिं

कुरुतः अत्रासमर्थसमासोदोषान्तरं गोवर्धनः॥ यथा॥ प्राक्प्रत्यक्पृथिवीभृतोः परिषदि प्रख्यातसंख्यावता मल्लापाद्भुततर्ककर्कशतया वि
च्छिद्य विद्यामदम् येके प्युत्कलभूपतेतवसभासंभाविताः पण्डिताः पत्रं श्रीजयदेवपंडितकविस्तन्मूर्द्धि विन्यस्यति॥ इत्यलंकारशेखरेवा
ग्दोषमरीचिः अथार्थदोषानाह॥ अष्टार्थदोषाविरसग्राम्यव्याहतखिन्नताः हीनाधिकासदृक्साम्यं देशादीनां विरोधि च अत्रविरसंप्रस्तुत
रसविरुद्धम्॥ यथा॥ किंरोदिषि हा राधे: सुतमरणमुचं जहीहि किंम्रियसे सफलय यौवनमधुना समम नुरक्तेन सुतनु मया अत्र करुण
शृङ्गारयोर्महान्विरोधः ग्राम्यमविदग्धोक्तिनिष्पन्नम्॥ यथा॥ स्वपिम्यद्यानवद्याङ्गि संप्रस्याप्तस्तवान्तिके मनागूरुद्वयं वालेकुञ्चितंसमु
दञ्चय॥ व्याहतं॥ उपात्तविरुद्धम्॥ यथा॥ विद्रावती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः साचीकृता चारुतरेण तस्यौ मुखे
नपर्यस्तविलोचनेन अत्र शैलदुहितृत्वभावप्रकाशनत्वेविरुद्धे एकेन प्रस्तरप्रकृतित्वस्यापरेण विदग्धत्वलाभात्॥ खिन्नमपुष्टम्
त्वत्प्रयाणसमुद्भूतधूलीलुम्पतिभास्करम् कृपाणं पाणिनाधत्से भूरेनत्वत्समोभुवि अत्र धूल्युत्थापनकृपाणधारणयोः शूरसाधारण्या
त्॥ शौर्यस्यापुष्टिः॥ हीनोपमं यथा॥ क्वचिदग्रे प्रसरता क्वचिदापद्यनिघ्नता शुनेव सारंगकुलं त्वया भिन्नं द्विषां वलम्॥ अधिकोपमं यथा॥

अ०शे० वसिष्ठवदयंदासोहनूमानिवमूषिका सरस्वानिवकूपोयंमुनीयंश्रीरिवस्वयम् अत्रयद्यप्युपमेयानांप्रकर्षएव तथाप्यात्यन्तिकरसहा
२ नैः सोपिनप्रतीयते॥असदृशोपमंयथा॥निर्ययौरुद्रनयनात्सस्फुलिङ्गोमहानलः वर्षन्तीशीकरासारंगंगाहिमगिरेरिव अत्रस्फुट
मसादृश्यम्॥देशादिविरोधियथा॥तत्रदेशकालवयोवस्थादिविरोधः प्रतीयते॥यथा॥प्रवेशेचैत्रस्यस्फुटकुटजराजिस्मितदिशिप्र
चण्डेमार्त्तण्डेहिमकरसमानोष्ममहसि जलक्रीडायातंमरुसरसिबालद्विपकुलंमदेनान्धंविध्वंस्यः समपारपातैः प्रशमिनः अत्रप्रवे
शेचैत्रस्यस्फुटकुटजेतिकालस्य मरुसरसीतिदेशस्यमदेनान्धमितिवयसः प्रशमिनइत्यवस्थायाः इदंचतत्तच्छास्त्रतत्तंत्रमाणतत्त
ल्लोकादिभेदादनन्तम्॥तत्रतु॥लोकस्यकवेश्चप्रसिद्ध्योर्विरोधः तत्रकविप्रसिद्धिरेववलीयसीति॥यथा॥सुसितवसनालंकारायां
कदाचनकौमुदीमहसिसुदृशिस्वैरंयांत्यांङ्गतोऽस्तमभूद्विधुः तदनुभवतः कीर्तिःकेनाप्यगीयतयेनसाप्रियगृहमगान्मुक्ताशंकाक्व
नासिशुभप्रदः अत्रकीर्तेर्ज्योत्स्नावत्प्रकाशतालोकविरुद्धापिकविसमयसिद्धेत्यदोषः ननुकथममीषांदोषता आकांक्षादिज्ञानाख्य
त्वेशाब्दज्ञानाविलम्बादितिचेन्न वाक्यान्तरापेक्षयाकाङ्क्षेसामग्रीवैलक्षण्यात् अन्यथाप्रतीतिवैलक्षण्यानुपपत्तेः तथाचान्वयबो

धानुकूलार्थाभासत्वेपिरसोत्पत्त्यनुकूलार्थाभावादिविरहोदोष इतिध्येयम् संप्रदायानुरोधेनव्याख्येयंममवस्तुतः तादृक्काव्यंप्रकुर्वी
तयन्नोद्वेगोनधीमताम्॥इत्यलंकारशेखरेवाक्यार्थदोषमरीचिः श्लाघ्यागुणाइत्युक्तंयुक्तंचैतत्॥यदाह॥अलंकृतमपिश्राव्यंनकाव्यं
गुणवर्जितम् गुणयोगस्ततोमुख्योगुणालङ्कारयोगयोः॥उक्तंचश्रीपादेन॥शब्दार्थौकाव्यस्यशरीरम् आत्मारसोगुणाः शौर्यादिवत् दो
षाः काणत्वादिवत् अलङ्काराः कुण्डलादिवत्॥तान्विभजते॥ गुणःसामान्यतोद्वेधाशब्देष्वर्थेषुचस्थितः दोषाणामप्यदोषत्वंप्राहु
र्वैशेषिकान्गुणान् तत्रसंक्षिप्तत्वमुदात्तत्वंप्रसादोक्तिसमाधयः अत्रैवान्यसमावेशात्पंचशब्दगुणास्मृताः॥स्वल्पाक्षरेणभूयोर्थ
कथनंसंक्षेपः॥यथा॥तेहिमाचलमामंत्र्यपुनःप्रेक्ष्यचशूलिनम् सिद्धंचास्मैनिवेद्यार्थंतद्विसृष्टाःखमुद्ययुः श्लाघ्यविशेषण
वत्त्वमुदात्तत्त्वम्॥यथा॥श्रुत्वायंसहसागतंनिजपुरात्त्रासेननिर्गच्छतांशत्रूणामवरोधनैर्जलभरप्रस्यन्दलिम्पत्पुटाः शुभ्रेस
द्मनिपल्लविन्युपवनेवाप्यांनवांभोरुहक्रीडाद्रौनवशाद्वलेविचलितग्रीवैर्विमुक्तादृशः अत्रशुभ्रेपल्लविनीत्यादिविशेषणानांश्ला
घ्यता झटित्यर्थप्रत्यायकत्वंप्रसादत्वम्॥यथा॥सविश्वजितमारेभेयज्ञंसर्वस्वदक्षिणम् आदानंहिविसर्गायसतांवारिमुचामिव

अ॰ओ॰ कौशलादर्थविशेषलाभउक्तिः॥यथा॥कुशलंतस्याजीवतिकुशलंपृच्छामिजीवतीत्युक्तम् पुनरपितदेवकथयसिमृतांनकथया
१० मिपाम्बसिति अत्रकुशलमकुशलंवेत्युत्तरेकर्तव्येजीवतीत्युक्तिविशेषाज्जीवितमात्रंलभ्यते॥अन्यधर्माणामन्यत्रारोपणंस
माधिः॥यथा॥नीलाब्जानांनयनयुगलद्राघिमादत्तपत्रः कुंभावैभौकुचपरिकरः पूर्वपक्षीचकार भ्रूविभ्रांतिर्मदनधनुषोविभ्र
मामन्ववादीत् वक्त्रज्योत्स्नासितकररुचंदूषयामासतस्याः अत्रपत्रदानादिपदानांचेतनधर्माणामारोपणमिति॥इतिशब्दगुण
मरीचिः ॥ अथार्थगुणानाह॥भाविकत्वंसुशब्दत्वंपर्यायोक्तिःसुधर्मिता चत्वारोर्थगुणाः प्रोक्ताः परेत्वत्रैवसंगताः संगताअं
तर्भूताः॥तदाहुः॥अलंकाराश्रिताः केचिद्दोषान्तर्गताः परे चतुर्ष्वन्तर्गताः केचिदतश्चत्वारएवते॥तत्रभाविकत्वमभिप्राय
पूर्वकाभिधानम् स्वपरीत्यमितियावत्॥यथा॥दृष्टिंहेप्रतिवेशिनिक्षणमिहाप्यस्मद्गृहेदास्यसिप्रायेणास्यशिशोः पितानवि
रसाः कौपीरपः पास्यति एकाकिन्यपियामितद्वरमितः स्रोतस्तमालाकुलंनीरंध्रास्तनुमालिखन्तुजरठच्छेदानलग्रंथयः अत्रो
पपतिप्रतिसंकेताभिप्रायेणैवमभिधानम्॥दारुणेर्थेः दारुणपदतासुशब्दता॥यथा॥देवव्रतेवांछतिदीर्घनिद्रांद्रोणेचकर्णे

चपशेषविशेषे लक्ष्मीसहायस्तवाद्यक्लवात्सल्यवान्द्रोणिर्यसहायः अत्र ॥ मुमूर्षति मृते चेत्यर्थे ईदृक्पदत्ताक्रमेणपद्वस्तुतत्क्र
माभिधानम् ॥ पर्यायोक्ति यथा ॥ प्रथममरुणच्छायस्तावत्ततः कनकप्रभस्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः उदय
तिलतोध्वांतध्वंसक्षमः क्षणदामुखे सरसविसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः पत्रविशेषणद्वाराविशेष्यलाभः सासुधर्मिता ॥
यथा ॥ अयमुदयति मुद्राभञ्जनः पद्मिनीनामुदयगिरिवनालीवालमन्दारपुष्पम् विरहविधुरचक्रद्वन्द्ववन्धुर्विभिन्दन्कुपि
तकपिकपोलक्रोडताम्रस्तमांसि अत्रपद्मिनीप्रकाशादीनां सूर्य्यनियतत्वात्तल्लाभः ॥ इत्यर्थगुणमरीचिः ॥ ८ ॥ इदानीं वैशेषि
कान्गुणानाह ॥ पदवाक्यतदर्थेषु ये दोषाः पूर्वमीरिताः तेषांक्वचिद्दोषत्वं यत्त द्वैशेषिको गुणः उक्तानामेव दोषाणां विषयाव
स्थादिभेदाद्यददोषत्वं तदेव वैशेषिकगुणत्वमित्यर्थः ॥ केचित्तु ॥ एतेषामेव दोषाणां स्थाने ष्वेतेष्वदोषतापरं नत्वस्तिगुणतापार्थ
क्यमनयोर्यतः अन्ये तु क्वचिद्दोषतामात्रे क्वचिद्गुणतापि तत्र सहृदयानामेव प्रतीतिः साक्षिणी ॥ तदाहुः ॥ अलङ्कारे गुणे दोषे रसे
चकाव्यसम्पदाम् प्रतीतिरेव विदुषां प्रमाणमवसीयते ॥ श्रीपादस्तु ॥ रसोत्पत्तिप्रतिबन्धकतयैवैतेषां दोषता यत्र केनापि निमि

 तेननरसप्रतिबन्धस्तत्रादोषत्वमुचितमेवेत्याह तत्रपदेषु यथासम्भवमाह अनुप्रासेषु नोक्तम्॥ यथा॥ महाराष्ट्रेतु नोष्ट्रिणः इत्यादौ श्ले
 षादीनाप्रयुक्तता येनध्वस्तमनोभवेनवलिजित्कायः पुरास्त्रीकृतोयोगङ्गांचदधेऽन्धकक्षयकरोयोवर्हिपत्रप्रियः यस्याहुः शशिमच्छि
रोहरइतिस्तुत्यंचनामामराः सोऽव्यादिष्ट भुजङ्ग-हारवलयस्त्वांसर्वदोमाधवः अत्रक्षयशब्दोगृहे मिथस्तुतोनसन्दिग्धम्॥ यथा॥ एषु
कार्त्तस्वरपात्रंभू षितनिःशेषपरिजनंदेव विलसत्करेणुगहनंसंप्रतिसममावयोस्सदनम् नव्यर्थयमकादिषुयथा दधत्युरोजद्वयमुर्व
शीतलंभुवोगतेवस्वयमुर्वशीतलम् वभौमुखेनाप्रतिमेनकाचनश्रियाधिकार्याप्रतिमेनकाचन॥ अत्रचमत्कारः नाश्लीलंभगवत्यादिषु
॥यदाहुः॥ भगिनीभगवत्यादौशिवलिङ्ग-गुहादिषु अभिप्रेतकुमार्यादौत्वश्लीलंनैवदुष्यति अश्लीलत्रयमत्रोक्तमितिध्येयम्॥ दण्डीतु॥ नि
ष्ठ्यूतो द्गीर्णवान्त्यादिगौणवृत्तिव्यपाश्रयम् अतिसुन्दरमन्यत्रग्राम्यकक्षांविगाहते॥ तद्विवेनाप्रतीतकम् यथा सर्वकार्यशरीरेषुमुक्त्वा
गस्कन्धपंचकम् सौगतानामिवात्मान्योनास्तिमन्त्रोमहीभृताम् सह्यायाः साधनोपायादेशकालौबलाबलौ विपत्तेश्चप्रतीकारः पञ्चा
ङ्गोमन्त्रउच्यते रूपंसंज्ञाच संस्कारोवेदनानुभवस्तथा इतिबौद्धाः शरीरेषुमन्यन्तेस्कन्धपंचकम्॥ इतिभार्गवसर्वस्वे॥ नासाध्वनुकृतौ

हुंहुंहुंननममेतियुवत्याजल्पितंजयतिमानधनायाः इत्यादौ नापिलक्षणादावबाचकम् ॥ ७ ॥ ७० ॥ लक्षणादेरशक्येएववृत्ति त्वादितिहृदयम् ॥ इदानींवाक्येषुयथासम्भवमाह ॥ प्रतीत्यवाधान्न्यूनम् ॥ यथा ॥ तस्यसंवृतमन्त्रस्यगूढाकारेङ्गितस्यच फलानुमेयाः प्रारंभाः संस्काराः प्राक्तनाइव यत्रान्यल्क्रियापदंनास्तितत्रास्तिर्भवतिर्वाप्रथमपुरुषेप्रयुज्यते इतिन्यायेनयत्रतद्द्वयेननापत्तिस्तत्रतद्दूष णमित्यर्थः एवंप्रकरणादिनापदान्तरस्यलाभेद्रष्टव्यम् ॥ अतउक्तम् ॥ प्रतीत्यवाधादिति पादभेदेविसंधिर्न ॥ यथा ॥ यद्यपिनदृतिस रोषंमृगपतिपुरतोपिमत्तगोमायुः तदपिनकुप्यतिसिंहोअसदृशपुरुषेषुकः कोपः इन्द्रस्याशुचिसूकरस्यचसुखेदुःखेननास्त्यन्तरं स्वेच्छाकल्पतयालयोः खलुसुधाविष्ठाचकाम्याशनम् रंभाचाशुचिशूकरीचपरमप्रेमास्पदंमृत्युतः संत्रासोअसमः स्वकर्मगतिभि श्चान्योन्यभावः समः ॥ इतिशान्तोदाहरणम् ॥ इहयद्यपिपदलिखितसंधिविरहोनदोषइतितथाप्यनुशासनविरुद्धत्वाद्विसदृशपुरुषे ष्वितिपठनीयम् नव्याकीर्णन्तुसापेक्षे अथप्रजानामधिपः प्रभातेजायाप्रतिग्राहितगन्धमाल्याम् वनायपीतप्रतिबद्धवत्सांयशोधनोधेनु मृषेर्मुमोच ॥ इत्यादौ ॥ नान्यवाक्येसमाप्तासमाप्तपुनरात्तवाक्यभेदेनदोषः तंश्लेषः प्रतिजग्राहकालिंगोगजसाधनः पक्षच्छेदोद्यतं

अ॰शे॰ शङ्कशिलावर्षीव पर्वतः॥ यथावा॥ नकिलानुपयुक्तस्यराज्ञोनोरक्षितुर्यशः व्याप्नुयात्परस्वेभ्यः श्रुतोतस्करतास्थिता समस्तेयतिभङ्गेन
१२ यथा कल्याणानांत्वमसिमहसांभाजनंविश्वमूर्त्तेधुर्यांलक्ष्मीमलमपिभृशंधेहिदेवप्रसीद यद्यत्पापंप्रतिजहिजगन्नाथनम्रस्यतन्मेभद्रंभ
द्रंवितरभगवन्भूयसेमङ्गलाय विरुद्धंनतथावाक्येविरुद्धंधियमुत्पादयत्वित्यभिप्रायेणप्रयोगेतन्नदोषइत्यर्थः वालादीनार्थवर्जितम् आदि
पदेनवीरवातुलादिपरिग्रहः काकार्यमित्यादीवाक्यार्थंयथासम्भवमाह विरसंनाप्रधानके॥ यथा॥ क्षिप्तोहस्तावलग्नः प्रसभमभिहतोप्या
ददानोंशुकान्तंगृह्णन्केशेष्वपास्तः चरणनिपतितोनेक्षितस्संभ्रमेण आलिङ्गन्योवधूतस्त्रिपुरयुवतिभिस्साश्रुनेत्रोत्पलाभिः कामीवार्द्रापरा
धःसदहतुदुरितंशांभवोवःशराग्निः व्यर्थनकर्मणिग्राम्ये व्यर्थैःपदैः पिशुनयेच्चरहस्यवस्त्वितिभारतोक्तेः॥ सर्वत्रहेतुमाह॥ रसहानेरयोगतः
॥ अथसर्वसाधारणमदोषत्वमाह॥ तत्रतत्राभिधातव्येतथानुकरणादिषु उन्मत्ताद्यभिधानेषुकोपिदोषोनविद्यते॥ श्रीपादस्तु॥ तदर्थातिशये
शोकेदैन्येकोपेवधारणे विषादेविस्मयेहर्षेपुनरुक्तंनदुष्यति॥ इतिवैशेषिकंगुणमरीचिः॥ ९॥ अलंकारास्तुशोभायैइत्युक्तंतच्चसाधु गुणवत्य
पिनिर्दोषेःलंकारैःकाव्यराजनि जायतेन्यैवसुषमारत्नालङ्करणैरिव॥ आहुश्च॥ निर्दोषंगुणवत्काव्यमित्यादितत्रचमत्कारविशेषकारित्वमिति

सामान्यलक्षणम् शब्दार्थनिष्ठत्वेनविशेषितंविशेषलक्षणद्वयम् परम्परयारसोपकारित्वंतदित्यन्ये तत्रप्रथमंशब्दालंकारान्विभजते चि
त्रं वक्रोक्त्यनुप्रासगूढश्लेषप्रहेलिकाः प्रश्नोत्तरंचयमकमष्टालंकृतयोध्वनौ तत्रकौतुकविशेषकारिचित्रम् तच्चखड्गचक्रपद्मादिभे
दादनन्तम्॥यदाह॥सर्वतोभद्रधेन्वादिगोमूत्रीमुरजादिच गतप्रत्यागताद्यांहुश्चित्रकाव्यंमुनीश्वराः तच्चमाघादौसुव्यक्तत्वान्नेहोदाह्रियतेअ
न्याभिप्रायेणोक्तंवाक्यमन्येनान्यार्थकतयायद्योज्यतेसावक्रोक्तिः एतदेववाकोवाक्यमुच्यते॥यथा॥कोयंद्वारिहरिः प्रयाह्युपवनंशाखामृगे
णात्रकिंकृष्णोहंदयितेबिभेमिसुतरांकृष्णादहंवानरात् मुग्धेहंमधुसूदनोव्रजलतांतामेवपुष्पान्वितामित्थंनिर्वचनीकृतोदयितयामुग्धोहरिः
पातुवः॥वर्णसाम्यमनुप्रासः॥सचद्विविधोलाटानुप्रासश्छेकानुप्रासश्च तत्रासकृदावृत्तवर्णोलाटानुप्रासः॥यथा॥अनङ्गमङ्गलगृहापाङ्गभ
ङ्गितरङ्गितैः आलिङ्गितस्सतन्वङ्ग्याकृतार्थयतुमानसम् अनेकस्यव्यंजनस्यसकृत्साम्यंछेकानुप्रासः नितम्बगुर्वीगुरुणाप्रयुक्तावधूर्वि
धातृप्रतिमेनतेन चकारसामत्तचकोरनेत्रालज्जावतीलाजविमोक्षमग्नौ पदमेकंहृदाकृत्वातदनुप्रासकाम्यया आदिक्षान्तलिपौका
दिक्षान्तशब्दंविचिन्तयेदितिरहस्यम्॥गूढक्रियागुप्तादिः यथा॥पुंस्कोकिलकुलस्यैतैर्नितान्तमधुरारवैः सहकारद्रुमारम्यावसन्तेकामपि

 भियम्॥इहैवनानापदाहुः॥क्रियाकारकसम्बन्धगुणाभ्यामन्वितस्यचगुणैस्तथासमासस्यलिङ्ग-स्यवचनस्यच एकोच्चारणापह्नुतभेदत्वंश्ले
 षत्वम् येनध्वस्तमनोभवेत्यादौ॥अयंचाष्टधापदाह॥विभक्तिपदवर्णानांलिंगस्यवचनस्यच भाषाप्रकृत्योर्भेदेनश्लेषास्युःप्रत्ययस्यच
प्रहेलिकास्फुटार्थाःसाच्युताक्षरादत्ताक्षरादिःयथा॥विदग्धःसरलोरागीनितम्बोपरिसंस्थितः तन्वङ्ग्यालिंगितःकण्ठेकलंकूजति
कोविटः अत्रविटइत्यत्रविकारस्थानेघकारादानेद्वितीयोर्थोभवति॥साचषोढातदाह॥च्युताक्षरा।दत्ताक्षरोभयमुष्टिर्विंदुमत्यर्थवत्यपि
प्रश्नोत्तरमपिद्विविधम् वहिरन्तरञ्चतत्रवहिःप्रश्नोत्तरम्॥यथा॥प्रायःकार्येनियुज्यन्तेजनास्सर्वेत्रकीदृशाः नाधेत्ययंभवेच्छब्दोनौवा
नीचदृक्कीदृशः॥सावधानाः अन्तःप्रश्नोत्तरंयथा॥काहमस्मिगुहावक्तिप्रश्नेमुष्मिन्किमुत्तरम् कथमुक्तंनजानासिकदर्थयस्तिपत्स्ववे
अतुल्यार्थत्वेसत्यानुपूर्वीविशेषविशिष्टनियतव्यञ्जनसमुदायाभ्यासोयमकम्॥यथा॥नवपलाशपलाशवनंपुरःस्फुटपरागपराग
तपंकजम् मृदुलतान्तलतान्तमलोकयत्ससुरभिंसुरभिंसुमनोभरैः तच्चेदंसंक्षेपेणसप्ताशीतिप्रकारमितिचान्यत्रविस्तरः॥एतच्चित्र
मितिगोवर्द्धनः इत्यलंकारशेखरेशब्दालङ्कारमरीचिः॥१०॥अथार्थालङ्कारान्विभजते॥उपमारूपकोत्प्रेक्षासमासोक्तिरपह्नुतिःसमाहितंस्व

भावस्यविशेषः सारदीपकौ सहोक्तिरन्यदेशत्वंविशेषोक्तिविभावने एवंस्युरर्थालङ्काराश्चतुर्दशनचापरे॥तत्रभेदेसतिसाधर्म्यमुपमा॥अधि
कगुणवत्तयासंभाव्यमानमुपमानम् निकृष्टगुणवत्तयासम्भाव्यमानमुपमेयम्॥तांविभजते॥वाक्यार्थातिशयश्लेषनिन्दाभूतविपर्ययाः सं
शयोनियमः स्वेच्छविक्रियेत्युपमादश तत्रवाक्यार्थेनैववाक्यार्थोयत्रोपमीयतेसावाक्यार्थोपमा साचद्वयीप्रत्येकसादृश्यानपेक्षा॥ तत्सापे
क्षाच॥आद्यायथा॥कामिनीनयनकज्जलपङ्कादुत्थितोमदनमत्तवराहः कामिमानसवनान्तरचारी कन्दमुत्खनतिमानलतायाः॥अन्या
यथा॥त्वदाननमधीराक्षमाविर्दशनदीधिति भ्रमद्भृङ्गमिवालक्ष्यकेशरंभातिपङ्कजम् यत्रातिशयधर्मोपन्यासस्सातिशयोपमा॥यथा॥क
ल्पद्रुमोनजानातिनददातिबृहस्पतिः अयंचजगतीजानिर्जानातिचददातिच पदश्लेषनिबन्धनसाम्यंश्लेषोपमा॥यथा॥तमालपत्राभ
रणाराजतेविलसद्भुजाः बालेवोद्यानमालेयंसालकाननशोभिनी यत्रोपमानस्यनिन्दयाप्रतिक्षेपस्सानिन्दोपमा॥यथा॥नागेन्द्रहस्तास्त्वचि
कर्कशत्वादेकान्तशैत्यात्कदलीविशेषाः लब्ध्वापिलोकेपरिणाहिरूपंजातास्तदूर्वोरुपमानबाह्याः यत्रासंसृष्टज्ञानेनसंसर्गमारोप्यसाम्यप्रस
ज्जनंसाभूतोपमा॥यथा॥उभौयदिव्योम्निपृथक्प्रवाहावाकाशगङ्गापयसः पतेताम् तदोपमीयेततमालनीलमामुक्तमुक्तालतमस्यवक्षः य

अ॰ त्रि॰ ओपमानस्यैवोपमेयतास्याद्विपर्ययोपमा॥ यथा॥ अयसुललितयोषिद्भ्रूलताचारुशार्ङ्गः रतिवलयपदाङ्केचापमासज्यकण्ठे सहचरमधुहस्तन्य
१५ स्तचूताङ्कुरास्त्रः शतमखमुपतस्थेप्रांजलिः पुष्पधन्वा॥ इत्यादि॥ यत्रोपमानोपमेययोः संशयकोटितासासंशयोपमा॥ यथा॥ किमिदुः
किंपद्मंकिमुमुकुरविंबंकिमुमुखंकिमब्जेकिंमीनौकिमुमदनवाणौकिमुदृशौ खगौवागुच्छौवाकनककलशौवाकिमुकुचौतडिद्वातायवा
कनकलतिकावाकिमबला यत्रतथ्यामावृत्यासाम्यलाभस्तानियमोपमा यथा॥ कस्तेपुरन्दरादन्यः प्रविमल्लोभविष्यति ऋतेसहस्रकि
रणात्वत्प्रतापसमोहिकः यत्रोपमानान्तरविरहतात्पर्येणस्वसाम्यंसास्वोपमा॥ यथा॥ आघूर्णितंपक्ष्मलमक्षियुग्मंप्रान्तद्युतिश्चैत्यजितामृतांशु
अस्याइवास्याञ्चलदिन्द्रनीलगोलामलश्यामलतारतारम् अभेदानुमानवदिहभेदोद्रष्टव्यः यत्रोपमेयमुपमानविकारतयोच्यतेसाविक्रियोप
मा यथा॥ हरिणादथतन्नयमादथपद्मात्पद्मपत्राञ्च आहृत्यकान्तिसारंविधिरसृजत्सुभ्रुवोदृष्टिम्॥ श्रीपादस्तु॥ समभिव्याहारोपमाप्यस्तिः
सा यथा प्रकृत्यैवमनोहारिवदनंहरिणीदृशः चन्द्रेल्हादकताकस्मात्पद्मकेनपरिस्कृतः॥ अत्रसर्वत्र॥ न्यूनाधिकत्वशंकाचेद्विभागेषुतदि
ष्यताम् किंचिद्विशेषमादायभेदोभेदश्चकश्चन काचित्समस्तान्वयिनीक्रियामात्रान्वयापरा विशेषणान्वयाकाचिदुपमाकापितत्परा॥ अ

यच्चमूर्तत्वसाम्यमाविर्भावयद्देवमभिधीयते अहोकाव्यस्यमाहात्म्यंसमतैवप्रतीयते॥तदाहराजशेखरः॥समानमधिकंन्यूनंसजातीयंविरोधिच सकुल्यं
सोदरंकल्पमित्याद्याःसाम्यवाचकाः अलंकारशिरोरत्नंसर्वस्वंकाव्यसंपदाम् उपमाकविवंशस्यमातैवेतिमतिर्मम॥इत्यलंकारशेखरेअर्थालंकारेउपमाम
रीचिः॥अतिसाम्यादपह्नुतभेदयोरुपमानोपमेययोरभेदप्रत्ययोरूपकम्॥यदाह तद्रूपकमभेदोयउपमानोपमेययोरिति॥दण्डीच॥उपमैवतिरोभूतभे
दारूपकमिष्यतइति॥तद्विभजते॥विश्लिष्टंचसमस्तंचव्यस्तंरूपकम् श्लिष्टंचरूपकंतस्मात्क्षेपात्पंचधास्मृतं तत्रयत्रोपमानविरुद्धोर्थस्तद्विरुद्धम् यथा
म
स्वानपरिभूतिर्मनागपि सीयतेनवाचरमवारिधेः पयसिलुप्तिमाक्रिन्दति नचत्रिदशसुभुवांवदनकान्तिभिर्जीयते यशस्तुहिनदीधि
तिर्जपतिकोपिभूमीपतेः॥समस्तंयथा॥तस्यावाहुलतापाणिपद्मंचरणपल्लवम् मुखेन्दुरस्मिभ्रमरौसर्वस्वंपुष्पधन्वनः॥व्यस्तंयथा॥
भुजौमृणालेवदनंसुधांशुः कुन्दानिदन्ताश्चरणौसरोजे स्मितंप्रसूनानिकरौप्रवालेपयोधरौभूमिधरौमृगाक्ष्याः॥रूपकरूपकंयथा॥मुखप
ङ्कजरङ्गेस्मिन्भ्रूलतानर्तकीतव नरीनर्तिलसत्स्वर्णकेतकीदललोचने॥श्लिष्टरूपकंयथा॥राजहंसोपभोगार्हभ्रमरप्रार्थ्यसौरभम् पुरस्त्व
विमुखमांकांचिन्मुखपंकेरुहंतव इदंचसमस्तासमस्ताद्विभेदादनन्तम् लक्षणाप्यत्रैवान्तर्भवति उपमानोपमेययोरभेदप्रतिप्रत्तेःरत्रापि

 सत्वात्॥तदुक्तम्॥रूपकंलक्षणादिकमिति॥साचद्विधा॥समस्तासमस्तभेदात्॥तत्राद्या यथा॥उदयतिकनकाचलयोरुपरिचलत्सद्गजम्न
 न्दुः तदुपरिधमान्धकारः कस्यकृतेधातुरीदृशीसृष्टिः॥अन्त्यायथा॥तामरसेसालसताजलमुचिकश्चिद्विपर्यासः निस्यन्दतालतायांकथयति
कस्यापिपुण्यानि॥इत्यलंकारशेखरेरूपकमरीचिः॥अन्यनिमित्तकेवस्तुन्यन्यनिमित्तकत्वारोपणमुत्प्रेक्षायथा॥गमनमलसयातैः कुम्भ
वत्सींकुचाभ्यामविकलकरशोभामूरुकाण्डद्वयेन यदियमहरदेषांहेतुनानेननूनंनिजवपुषिकरीन्द्राः पांसुपूरंक्षिपंति॥इयंच॥सर्वालं
कारसर्वस्वंकविकीर्तिविवर्द्धिनी उत्प्रेक्षाहरतिस्वान्तमचिरोढास्मितादिव शंकेमन्येध्रुवंप्रायोनूनंजानामितर्कये इवेत्यादिभिरुत्प्रेक्षाव्य
ज्यतेकाव्यवर्त्मनि अन्यदभिप्रेत्यान्याभिधानं॥समासोक्तिः॥सैवचान्यापदेशः उच्यते॥यथा॥त्वंपीयूषदिवोपिभूषणमसिद्राक्षेपरिक्षेतकोमा
धुर्येतवविश्वतोपिविदितामाध्वीकसाध्वीकया एतत्किन्तुतवाप्यरुंतुदमिवब्रूमोनचेत्कुप्यसेयः कान्ताधरपल्लवेमधुरिमानान्यत्रकुत्रापिसः
किंचिदपन्हु त्यपरस्यार्थप्रदर्शनंसापन्हुतिः॥यथा॥सीत्कारंशिक्षयतिव्रणयत्यधरंतनोतिरोमांचम् नागरिकः किमुमिलितोनहिनहिसखिहैम
नः पवनः आरब्धानुकूलाकस्मिकसहकारिलाभः समाहितम्॥यथा॥मानापनोदनविधौमदिरेक्षणायायावन्नमामिचरणावथतावदेव नीपस्व

लन्नवसमीरपुरः सराणिप्रादुर्बभूवुरविरद्धनगर्जितानि यस्यवस्तुनोयत्स्वभावतातदास्यानेस्वभावः॥तदेवजातिरुच्यतेयथा॥चलतिक
र्णविटष्टापच्छतिवाचंकर्णविदालीनाम् आस्तितुमेवहिमनुतेगुरुगर्भभरालसासुतनुः॥ विरोधोद्विविधः॥तत्राद्यः पारमार्थिकाविरोधेपि
औचित्येनविरोधिताप्रतीयतेयत्रसः॥यथा॥मनीषिताः सन्तिगृहेषुदेवतेत्यादौ॥द्वितीयस्तुयथा॥श्रुतेविरोधसंधानेःपियत्राभिप्रेतमासा
द्याविरोधः अयमेवविरोधाभासउच्यते॥यथा॥भक्तानांकामदस्तुष्टोरुषाकामदहन्नपि अपित्रानमयःस्थाणुर्ध्येस्तमीशंस्तुवीमहि उत्त
रोत्तरंयत्रसापेक्षः सतारः यथा॥विषयेषुतावद्वलास्तास्वपिगोप्यः स्वभावमृदुवाचः मध्येतासामपिसातस्याअपिसाचिवीक्षितंकि
मपिं समस्तवाक्योपकारकत्वंदीपकत्वम् तच्चाभिन्नं च तत्तत्कारकक्रियादिभेदादनंतम्॥अभिन्नंयथा॥पाणौपद्मधियेत्यादौ॥भि
न्नंयथा॥नृत्यन्तिनिचुलोत्सङ्गेगायन्तिचकलापिनः वध्नन्तिचपयोदेषुदृशोहर्षाम्बुगर्भिणीः अत्रविस्तरभियासर्वंनोदाहृियते एत
वमालादीपकभेदादनन्तम् अत्रपूर्वापरवाक्यार्थयोरुपकार्योपकारकंमालादीपकम् तत्रोत्तरस्यपूर्वोप कारकत्वम्॥यथा॥चारुता
वपुरभूषयदासान्तामनूननवयौवनयोगः तंपुनर्मकरकेतनलक्ष्मीस्तांमदस्तमपिवल्लभसङ्गः॥ पूर्वस्योत्तरोपकारत्वं॥यथा॥सङ्गमा

अ॰शे॰ ङ्गःसमागतेनभवताचापेसमासादिते देवाकर्णययेनयेनसहसायद्यत्समासादितम् कोदण्डेनशराश्शरैररिशिरस्तेनापिभूमंडलंतेनत्वं
१६ भवताचकीर्तिरतुलाकीर्त्याचलोकत्रयम्॥समानकालोक्तिःसहोक्तिः स्याद्द्वयी उदासीनयोस्त्वराप्रतिपत्तयेकार्यकारणयोरपि॥आद्या
यथा॥सहदीर्घामममश्वासैरिमाःसंप्रतिरात्रयः सममममशरीरेणक्षीयन्तेदिवसाअमी॥अन्त्यायथा॥वर्धतेसहपान्थानांमूर्च्छयाचूत
मञ्जरी पतंतिचसमंतेषामसुभिर्मलयानिलाः प्रयोज्यप्रयोजकयोर्वैयधिकरण्यमन्यदेशत्वम्॥यथा॥साबालावयमप्रगल्भवचसःसा
स्त्रीवयंकातराःसापीनोन्नतिमत्पयोधरयुगंधत्तेसखेदावयम् साक्रान्ताजघनस्थलेनगुरुणागन्तुंनशक्तावयंदोषैरन्यजनाश्रितैरप
टवोजाताःस्मइत्यद्भुतम् कारणेसत्यपिकार्याभावोविशेषोक्तिः॥यथा॥आवातिवारिधरशीकरवारिवर्षीस्वैरंकदंबवनदुर्ल्ललितःसमी
रः अङ्गेःपिबामिनलिनीनवपल्लवानितापस्तथापिसुदृशः शिथिलोनजातः कारणंविनाकार्योदयोविभावना॥यथा॥नाङ्गेषुरत्नाभरणा
निसन्तिनिश्वासहार्य्याण्यपिनांशुकानि तथापिसासम्प्रतिसारसाक्षीदिनेदिनेकामपिकान्तिमेति॥केचित्तु॥अन्यदेशत्वमेवविशेषोक्ति
विभावने अधिकरणद्वयमाराय॥अन्येतु॥अनयोरेवैकेनापरस्यान्यथासिद्धिर्व्यतिरेकमादायइति गोवर्धनस्त्वन्यामेवान्यथा सिध्यन्य

देशत्वमेवाविरोधकार व्यतिरेकालंकारस्त्वतिरिच्यतइत्येके ॥ सच यथा ॥ कादाचित्किंद्युतिंधत्तेकलङ्कीसीयतेन्वहम् दोषाकरः कथंकारं तवास्यनसमः प्रिये एकेनाप्रस्तुतस्यासिद्धिराक्षेपः सोपिद्व्यगित्यपरे ॥ यथा ॥ इन्द्रेणकिंसयदिकर्णनरेन्द्रसूनुरैरावतेनकिमसौयदित द्विपेन्द्रः दम्भोलिनाप्यलमयंयदितत्प्रतापः स्वर्गोप्ययंननुमुधायदितत्पुरीसा सुखबोधायबालानामतिकोमलवर्त्मना मयासंक्षेपणादि ष्टमलंकाराः प्रदर्शिताः यथैतेषामियोभेदः परेषांनातिरेकितातथालंकारसर्वस्वेसप्रपंचमदर्शयम् ॥ इत्यलंकारशेखरेलंकाररत्नम् ॥ उपमाकाव्यस्यसम्पदांसर्वस्वंसाचसाधर्म्यमिति इदानींतस्यप्रतियोग्यनुयोगिनावाह चन्द्रकलाम्बुजदामशिरीषविद्युत्ताराकनकलताच दमनककांचनयष्टीदीपः सर्वैरेभिर्योषिद्वर्ण्या ॥ यथा ॥ शिखेवदीपस्यलतेवहैमीकलेवचान्द्रीस्रजिवाम्बुजानाम् शिरीषपुष्पस्मरहेमयष्टी सामेकदालोचनगोचरोस्यात् दमनकतरुशाखाबालम्बिकोलङ्ग्युग्मंतुहिनकिरणविम्बेखञ्जरीटप्रचारः विकचकमलकोशेदाडिमीबीजपंक्ति स्थितयमिदमपूर्वंदृष्टमेकत्रचित्रम् तडिद्वातारावेत्यादौउद्भिन्नयारत्नशलाकयावेत्यादिदर्शनात्तथात्वंवर्ण्यतइत्याहुः अत्यंतानंदसन्दोहदा यिनीपरिवर्ण्यते ॥ यथा ॥ साकौमुदीनयनयोरमृतैकवर्तिरानन्दपंकजवनीविलसल्लताभाप्राणास्मरस्यजनपुण्यतरोः फलानिसाफल्यमसि

भ०शे० जनुर्याङ्कगतानजाने शक्तिर्मूर्तिमतीस्मरस्यजगतान्नारीमयंमण्डनङ्कान्तानामुपमानकल्पनकलाकान्तेः समुतेजनम् लक्ष्मीः संसृति
४७ सागरस्यसरसीलावण्यपुण्याम्भसांसाराजव्रजचक्षुषांक्षणमभूदानन्दपण्यस्थली रोचनास्वर्णविद्युद्भिर्हरिद्राभिर्वराटकैः चम्पकैर्हैमके
तक्यावर्ण्यतेतत्तनोर्द्युतिः॥ यथा॥ प्रत्यग्रपद्मवीजद्युतिकांचनकेतकच्छायं गोरोचनातिगौरंवपुरपिसाक्षात्कृतंतस्याः चम्पकदामहरिद्रा
काञ्चनसौदामिनीगञ्जक्कैपयतिकान्तिमेषानिजवपुषापद्मपत्राक्षी॥ इदमणुपलक्षणम्॥ तामग्रतस्तामरसांतराभामित्यादेः वेत्रत्वचातु
ल्यरुचांवधूनांकर्णान्ततोगण्डतलागतानि भृङ्गाः सखेलंपदिनापतिष्यन्कावेदयिष्यन्नवचम्पकानि॥ इत्यादेश्च॥ मोचात्वचःपञ्चषपाटला
नामित्यादेश्च काश्मीरगौरवपुषामभिसारिकाणामाबद्धरेखमित्यादेस्तत्तत्साम्यमपिवोधव्यम् तमः शैवालपाथोदबर्हभ्रमरचामरैः यमुना
वीचिनीलाश्मनीलाब्जाभिः समः कचः॥ यथा॥ नजीमूतच्छेदः सह्विगगनचारीनचतमोनचास्येन्दोर्मैत्रीनचमधुकरास्तेह्विमुखराः नपिच्छंत
त्केकिन्तुचितमसितायंनचमणिमेंदुत्वादाज्ञातंघनचिकुरपाशोमृगदृशः जानामिजानकिकलिन्दसुताजलेस्मिन्स्नातासिहन्तपदिमास्तवकुन्त
लानाम् वीचीषुनीलकमलस्रजिशैवलेषुदृश्यंतएवरुचयः कणशः प्रकीर्णाः तारांददानांवदनस्यचन्द्रंरुचाकचानांचनभोजयन्ती आकण्ठम

श्रोहितपमधुनिमहीभृतः कसमभोजयन्ती कुर्पासेनस्थगितहृदया संपुटं हाटकीयं मस्तन्यस्तांवलनिवसना चामरं वारिदाभम् यत्रासीनार
तिरिव वणिक्प्रेयसीवीथिकायांविक्रीणीतेमुकुलितमुखीसंज्ञयामौक्तिकानि अंगुल्यायद्विनिर्दिशेद्रुणिमालासागुटीविभ्रमंवाचापद्ययमुद्र
पारदघटीवुर्द्दिरस्यसद्युतिः द्गभंङ्ग्यायद्विनीलिमावितनुतेकाचस्रजः प्रत्ययंविक्रेतुंघतमौक्तिकानिभवतिव्यग्रावणिक्प्रेयसी ॥ इदमप्युपलक्ष
णम् ॥ पुनःपुनःकाचनकुर्वतीकचकूटाधियाधूपजधूमसंग्रहम् सखीस्मितैस्तर्कितवन्निजभ्रमाववंधतन्मूर्धजचामरंचिरात् इतिधूम
साम्येनोपमम् पाशः पक्षम्वहस्तश्चकलापार्थाः कचान्तरइतिरहस्यम् ललाटमर्धचन्द्रेणहेमपट्टिकयातथा केशान्धकारादथहस्यभालस्य
लार्धचन्द्रात्स्फुटमष्टमीयम् एतांयदासाद्यजगज्जयायमनोभुवासिद्धिरसाधिसाधु अधस्तादन्धकाराणामुपरिष्टात्कुरंगयोः सिन्दूरविन्दुसुभ
गदृष्टाकमकपट्टिका वल्लीस्मरधनुर्यष्टिविभृङ्गालीपल्लवैर्भुवौ ॥ यथा ॥ अयसुललितयष्टिद्रुलताचारुशार्ङ्गमित्यादि श्यामास्वंगंचकितहरिणी
प्रेक्षितेदृष्टिपातान्वक्त्रच्छायांशशिनिशिखिनांबर्हिभारेषुकेशान् उत्पश्यामिप्रतनुषुनदीवीचिषुभ्रूविलासान्हन्तैकस्मिन्क्वचिदपिनते चण्डि
सादृश्यमस्ति भ्रूपल्लवंमधुपराजिरुचांनिधिस्तेगण्डस्थलीकनकदर्पणदर्पहन्त्री हेकम्बुकण्ठिशुककिन्नरहंसवाणिप्राणाममासिमदनस्यचजे

अ०शे ग्रमलम् चन्द्रादर्शौकपोलस्पसुव्यक्तमव्यवहितश्लोकद्वयं पाणौपद्मधियामधूककुसुमभ्रान्त्यापुनर्गण्डयोरित्यादिदर्शनात्तथात्वमपि
१८ वर्ण्यते मुखस्येन्दुमजदर्पणाः किमिन्दुः किंपद्मंकिमुमुकुरविम्वंकिमुमुखमित्यादौ तिलप्रसूनंनाशायाः। यथा॥ बन्धूकद्युतिवान्धवोप
मधरःस्निग्धोमधूकच्छविर्गण्डश्चण्डिचकास्तिनीलनलिनश्रीमोचनंलोचनम् नाशान्येतितिलप्रसूनपदवींकुन्दाभदन्तिप्रियेप्रायस्त्वन्मु
खसेवयाविजयतेविश्वंसपुष्पायुधः कामतूणीकृत्यनासावर्ण्यते इतिश्रीहर्षः नाशावंशोमृगीदृशाम् नासानालीतिलोपममि त्यपिपठ
न्तिकण्ठः कम्बोःसमः स्मृतः॥यथा॥ हेकम्बुकण्ठिइत्यादौकम्बुग्रीवेतदद्देवाष्टमान्त्यइत्यादौ मृगतन्नेत्रपाथोजतत्पत्रभ्रमरखञ्जनैः ने
त्रस्यावीरतन्नेत्रकेतकालिस्मराशुगैः॥यथा॥ चकोरनेत्रेणदृगुत्पलानांनिमेषयन्त्रेणकिमेषदृष्टः सारःसुधोद्गारमयःप्रयत्नाद्विधातुमेत
त्सपनेविधातुः हरिणादपतन्नयनाद्यपद्मात्सद्मपत्रंचेत्यादि किमक्ष्णोःकिंमीनावित्यादि नयनेखञ्जनकमलेवाहूविलसन्मृणालविस
खण्डे मधुरपिशिरीषपुष्पंमुखमिन्दुस्त्वंशरह्ण्सस्मिः चकारसामत्तचकोरनेत्राविलोलनेत्रभ्रमरैर्गवाक्षाः पूर्णादलैः काचनकेतकीनाम
होवपुर्लंपगेवदृष्टिः॥केचित्तु॥कोशातकीपुष्पसमानकान्तिभिर्मुखैर्विनिद्रोल्वणवाणचक्षुषःग्रामीणवध्वस्तमलक्षितांजनेश्चिरंधृतीनामुप

[illegible]म् इतिमात्पर्यन्तत्वोशातकौत्वेनमुखंबाणत्वेननेत्रंवर्णनीयमितिवदन्ति॥ अन्येतु॥तयाप्रबुद्धानमचन्द्रकान्त्याप्रफुल्लच
क्षुः कुमुद[illegible]माप्याः प्रसन्नचेतस्सलिलः शिवोभूत्संस्प्रमानः शरदैवलोकः इतिदर्शनान्नेत्रंकुमुदोप ममित्याहुः प्रवालविम्ब
बंधूकपल्लवैरधरोष्ठकौ वर्ण्यौमाधुर्य्यमाश्रित्ययावन्मधुरवस्तुभिः पुष्पंप्रवालोपहितंयदिस्यान्मुक्ताफलंबास्फुटविद्रुमस्थम् ततो
नुकुर्याद्विशदस्यतस्यास्ताम्रोष्ठपर्यस्तरुचः स्मितस्य तन्वीश्यामाशिखरदशनापक्वबिंबाधरोष्ठीमध्येक्षामाचकितहरिणीप्रे
क्षणानिम्ननाभिः श्रोणीभारादलसगमनास्तोकनम्रास्तनाभ्यांयातत्रास्ते युवतिविषयेसृष्टिराद्येवधातुः वंधूकद्युतिबान्धवोपमध
रद्युति[illegible]जबाप्यत्रवर्णनीयेतिगोवर्द्धनः माधुर्यमाश्रित्येत्यादि यथा॥ त्वंपीयूषदिवोविभूषणमसीत्यादौ मुक्तामाणिक्यनारंगदाडिमीकुन्द
[illegible]भिश्चरदावर्ण्याः कुर्यासेनस्यगितेत्यादौ तन्वीश्यामाशिखरेत्यादौ तदन्तानागरंगानिकोलङ्गानिपयोधरौ ओष्ठाधरौचबि
[illegible]फलमपीप्रिया दमनकेत्यादि बन्धूकद्युतीत्यादि॥तत्कोरकैर्यथा॥अधरः किशलयमेषापद्मौकुन्दस्यकोरकादन्ताः कःकोके
[illegible]काम् प्रहससिहसतोहसन्तिहरिणाक्ष्याः तारारदानामित्यादि वाणीहंसालिभृङ्गकिन्नरैः वेणुकोकिलवीणाभिर्माधुर्यमधुरैः सह य

अ॰शे॰ था॥ हेकम्बुकण्ठिशुककिन्नरहंसवाणीत्यादि तस्यमेपुर्हिरेफाणांकर्णोत्पलनिपातिनाम् स्वरसंवादिभिः कण्ठैः शालिगोप्योऽजगुर्गुणान् क
७९ ण्ठः किमस्याःपिकवेणुवीणास्तिस्रोजितासूचयतित्रिरेखः इत्यन्तरास्तूयतकाचिदन्ननलेनभेमीकलमालपन्ती माधुर्यमित्यादि मधुद्रोणी
वमन्दाक्षमन्दामन्दवृष्टिवत् सुधासारइवद्रासागोपीवाणीतवप्रिये बाहुर्बिसेनविद्युद्वल्लिमृणालैर्विसमृणालयोरवान्तरभेदविवक्षयोक्तम् अ
स्याभुजाभ्यांविजिताहिसात्किंपृथक्करोगृह्यततत्प्रसूनम् इहेक्षतेतन्नुगृहाश्रितैः कैर्नेगीयतेवाकरएवलोकैः विद्युन्मृणालसुभगाबाहुवल्लीमृ
गीदृशः पूनान्तुकण्ठकाण्डेषुजाताकनकशृंखला करस्तुपद्मेनपल्लवविद्रुमाभ्याम् करकिशलयेनसुदृशारागसरित्पंकजेनेव शिथिलितविद्रु
ममहसास्पृष्टेहचेतनांनलेभे चन्द्रकलाकुन्दकोरकैश्चनखाः यथा॥ निर्भर्त्सिताशोकदलप्रसूतिपाणिद्वयंचारुनखंतदीयम् नवोदितेन्दुप्रतिम
स्यशोभांबोमनः प्रदोषेविपरीचकार निर्दोषरत्नसुभगैः कुन्दकोरककान्तिभिः नखैः कमलपत्राणिबालाचक्रेपृथक्पृथक् पूगाङ्कुतवकोर
कबिल्वतालगुच्छेभकुम्भाद्रिघटेशचक्रैः सौवीरजंबीरकबीजपूरसमुद्गकोलङ्गफलैरुरोजः यथा॥ कनककमुकायितंपुरस्तादथपङ्केरुहकोर
कायमानम् क्रमशःकमलायमानमास्तेसुदृशोवक्षसिकस्यभागधेयम् कलशीयतिकुचकमलंकमलीयतिलोचनभ्रमरः अणुकीयतिपुनरस्या

हरिणदृशः प्रत्यहंमध्यः स्तनविल्वद्वयीलस्यः प्रययौवक्रथाकताम् उड्डीयपुनरद्रीर्णाजहारविपुलश्रीयम् चिरप्रवासिँस्तववाटिकायांवि
भर्तिवल्वानिफलानिवीक्षत सौवीरजम्बीरकवीज पूरतालान्यसौधास्यतिकिंनजाने स्वगोवागुच्छोवेत्यादिस्वयंभूः शंभुरंभोजलोचनेत्वत्प
योधरः मस्तेनकस्यधम्मस्यचन्द्रचूडोभविष्यति संपुटंहाटकीयमित्यादिरमनकतरुशाखालम्विकोलद्वयुग्ममित्यादिमहतोपिमहीयांस
मणियांसमणोरपि तत्प्रतीकंविदुर्नूनमणुमध्येनभस्तनि रेखाकान्तातिसुभ्रुया मारोमालिस्तेनताहशैः शैवालधूमभृंगालिलताद्यैरुपमी
यते नाभीविलादुच्चलिताभुजङ्गीरोमालिरास्येन्दुसुधालिलिसुः समीस्यकेशावलिवर्हिमालामुरोजगिर्योः समलीयताम्तः सुगममिदम् नाभी
रसातलावर्त्तहृदकूपनदादिभिः यथा॥ मदनसरितमेतांगाहमानोजनोसौजघनपुलिननाभीमण्डलावर्तरम्याम् मुखकमलसनाथामुल्लस
द्भूलतोर्मिविरविरहदुताशायासमुक्ताञ्चकार स्वन्नाभिकूपः पातालेनितम्वस्तवमेदिनी पयोधरस्तेहेमाद्रिस्त्वंममासिजगत्त्रयम् हृदनदसौ
सिम्नामिस्विवलीतटिनीरसात्मकस्त्ववपुः तदपितलोदरिसंप्रतिकथमिवसंतापमातनुषे वलीतटिन्यातद्रूपैस्तत्त्तमैः पाशादिभिस्तदाह त्रि
वलीपाशीस्तमातयावद्धः कामस्यसोपानमिवप्रयुक्तमितिष्टष्ठंकांचनपट्टकैः मुक्तावलिस्तेरदनाः पृष्ठंकांचनपट्टकम् नखांशवस्तेरत्नानिम

अ॰ पेशीमसिकिंप्रिये सूच्यग्रतलसून्पाणुवेदीसिंहादिभिः समः मुष्टिग्राह्योभवेन्मध्यः अत्रमध्यस्यातिसूस्मतयातत्प्राधान्येनोपमानता अत
२ एवमुष्टिग्राह्यतातलप्रमाणता सूस्मत्वादेवमध्येमून्यताच अतएवसदसत्संशयगोचरोदरीत्यपिवर्णयन्ति जघनंपुलिनोपमं॥यथा॥मद
मसरितमेतामित्यादि पीठप्रस्तरभूचक्रैर्न्नितम्बः परिवर्ण्यते॥यथा॥नितम्बः स्वर्णपीठस्तेतवाङ्गुल्यम्बपल्लवाः ज्योत्स्नेन्दुपुष्पपीयूषफे
नवलिस्मितंतव तपनीयशिलासोभाकटिरित्यादि नितम्बस्तवमेदिनीत्यादि चक्रेणविम्बंपृथिपुष्पकेतुः पितुर्जितंवीस्यसुदर्शनेन ज
गज्जिगीषस्यमुनानितम्बमयेनकिंदुर्लभदर्शनेन विभम्यवश्चारुनितम्बचक्रेदृतस्पदृक्तस्यखलुस्खलन्ती स्थिराचिराद्यास्ततदूरुरम्भा
स्तम्भाशुपाणिकरेणगाढम् रथचरणविशालश्रोणिलोलेक्षणेचेतिमाघः अक्रान्तरद्वयसाम्यमप्यत्र ऊरुस्तुकरिहस्तेनकदल्याकरभेनच॥
यथा॥कदलीकदलीकरभः करभः करिराजकरः करिराजकरः भुवनत्रितयेपिविभर्तितुलामिदमूरुयुगंनचमूरुदृशः चरणः पल्लवांभोजस्तव
कप्रवालकैः यथा॥विजितप्रवालपल्लवकवलीकृतप्रोल्लसत्सुखमे पदकमलेकमलायाः लुठदलकः पातुदेवकीसूनुः अभ्युन्नतांगुष्ठनखप्र
भाभिर्निक्षेपणाद्रागमिवोद्गिरन्तौ आजह्रतुस्तच्चरणौपृथिव्यांस्थलारविन्दश्रियमव्यवस्थाम् पूर्णेन्दुनाङ्गुष्ठनखैः॥यथा॥यशः पदाङ्गुष्ठनखैःकिम्

अ॰ चि॰ लपन्नाणमैत्रेतस्यानुकारिणीइत्यादि॥विस्तृतमन्यत्रइदमुपलक्षणम्॥आह्लादत्वपुरस्कारेणचन्द्रादिसाम्यमुभयोरपि॥यथा॥इतिद्विजेनद्विज
२२ राजकान्तिरित्यादि इन्दुप्रभामिन्दुमतीवभार्येइति स्फुरत्कमलपत्राभइतिश्रुतयोधेप्रतापोग्न्यादित्यजाद्यैः कीर्तिश्चन्द्रादिशुभ्रकैः करेपद्मोर्ध्व
रेखादिपदेछत्रध्वजादिकम् गमनेहस्तिसिंहाभ्यांकाङ्क्ष्यंच भुजादिषु॥स्फुटमिहोदाहरणम् गमनेयथा॥ पूर्वयथादेवपतेर्नियोगमूढोवह
न्कार्मुकबाणहस्तः प्राप्तस्तथैवाशुगजेन्द्रगामीप्रोद्भिद्यमानेनवयौवनेन ततोमृगेन्द्रस्यमृगेन्द्रगामीत्यादि सुरुत्तरपदेव्याघ्रपुङ्गवर्षभकुञ्ज
राः सिंहशार्दूलनागाद्याः पुंसिश्रेष्ठार्थवाचकाः आदिपदादृषभोपिकर्तव्यस्तत्रसिंहाद्या नरराजादितः परात् विशेष्यभावोद्युसदांनरभूमिवि
शेषणात् यद्यत्तामुद्रिकायुक्तान्तद्वर्ण्यमुभयोरपि किन्तुशिष्टप्रयोगोऽत्रमपाकस्पतयेष्यते॥ इत्यलंकारशेखरेपुरुषवर्णनमरीचिः॥इदानीं
सादृश्यप्रापकप्रकाशनाह इवाद्यैः प्रतिमानाद्यैस्समानाद्यैर्निभादिभिः वन्धुचौरारिवंश्याद्यैः सादृश्यप्रतिपत्तयः॥तदाहुः इवाद्यैरिति॥इवव
द्यथाशब्दाः समाननिभसंनिभाः तुल्यसंकाशनीकाशप्रतिमाप्रतिरूपकाः सदृक्सदृशसंवादिशब्दाः सादृश्यवाचकाः॥ प्रतिमानाद्यैरि
ति॥प्रतिमानंप्रतिबिंबंप्रतिमाप्रतियातना प्रतिच्छायाप्रतिकृतिरर्चापुंसिप्रतिनिधिरुपमोपमानंस्यात्॥समानाद्यैर्निभादिभिरिति॥वाच्य

लिंगाः समानश्च सदृक्षः सदृशः सदृक् साधारणः समस्तुल्यः स्युरुत्तरपदेत्वमी निभसंकाशनीकाशप्रतीकाशोपमादयः बंधुरितिबन्धुर्मि
त्रंबयस्यश्चप्रेयान्प्रीतः सुहृत्सखा उपमानोपमेययोरेवम्॥चौरेति॥ चौरैकागारिकस्तेनदस्युतस्करमोषकाः प्रतिरोधिपरास्कंन्दिपाट
च्चरमलिम्लुचाः मुखकान्तिचोरश्चन्द्रइत्यादिकर्तव्यम्॥अरीति॥रिपुवैरिसपत्नारिद्विषद्वेषणदुर्हृदः द्विड्विपक्षाहितामित्रदस्युशात्रवश
त्रवः अभिघातिपराराातिप्रत्यर्थिपरिपन्थिनः चंद्रस्यवैरिमुखंइत्यादिकर्तव्यम्॥ वंशाद्यैरिति॥ संततिर्गोत्रजननकुलान्यभिजनान्वयौवं
शोन्ववायः संतानः सपिंडास्तुसनाभयः समानोदर्य्यसोदर्यसगर्भ्यसहजाः समाः सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः चन्द्रगोत्रं
चन्द्रसोदरंमुख मित्यादिकर्तव्यम्॥प्रकारान्तरमाह॥ भृतकाद्यैश्चभृत्याद्यैर्न्यक्कारार्थैः क्रियापदैः सन्देहवत्तदाक्याद्यैः सादृश्यंप्रतिपद्यते
भृतकाद्यैरिति भृतकोभृतिभुक्कर्मकरोवैतनिकश्चसः मुखस्यभृतकश्चन्द्रइत्यपिवोद्धव्यम्॥भृत्याद्यैरित्यादि॥भृत्येदासेर्यदासेरदासगोप्य
कचेटकाः नियोज्यकिंकरप्रेष्यभुजिष्यपरिचारकाः मुखदासः शशीत्यादिकर्तव्यम्॥न्यक्कारार्थैरिति॥ न्यक्करोतितिरस्कुर्वन्प्रतिक्षिपतिभ
र्त्सीति आक्रोशत्यवजानातिकदर्थयतिनिन्दति विडम्बयतिसंरुधेच्छंसतीर्ष्यत्यसूयति त्वन्मुखंचन्द्रंन्यकरोतिइतिध्येयम् तृणीकृतमधि

अ॰शो॰ स्तिंद्दुनिरस्तंचलघुकृतम् अनाहतमवज्ञातमम्भोजंत्वन्मुखेन्दुना॥ सन्देहेति॥ यथा॥ किमिन्दुः किंपद्ममित्यादि तत्तद्वाक्यैरिति॥ तस्यपुष्णाति
२३ सौभाग्यंतस्यकान्तिंविलुंपति तेनसार्द्धंविगृह्णाति तुलान्तेनाधिरोहति तत्पदव्यांपदंधत्ते तस्यकक्षांविगाहते तमर्थमनुबध्नातितच्छीलंत
न्निषेधति तस्यचानुकरोतीतितमर्थमनुविंदति आकारपस्याहूयतेजिगीषतिसपृहम् विधिरम्भोजसाम्राज्येमुखेन्दुमभिषिञ्चति तस्या
मुखेनसदृशंकन्दर्पकर्तुमिच्छति भवतीन्दुर्नदासोपित्वदास्यंचेत्किमिन्दुना चन्द्रमूर्ध्निपदंधत्ते रथाचंद्रप्रतप्यसि लीयतेचन्द्रमाःक्का
पितिभेतिचपद्यापते॥ रण्ठितु॥ प्रतिच्छन्दसरूपादिसजातीयानुवादिनः सलक्षणसपक्षाभसवर्णतुलितादिकम् कल्पदेशीयदेशादियेचान्यू
नार्थवाचिनः समासश्चबहुव्रीहिः शशांकवदनादिषु भवन्तीवादिशब्दाश्चसादृश्यप्रतिपत्तये॥ इत्याह॥ कवीनांघटनान्यैवचराचरविलक्षणा
भकर्तुमन्यथाकर्तुंकर्तुंपारसमतेजगत्॥ इत्यलंकारशेखरेवर्णकरत्नम्॥ इदानींकविसंप्रदायस्यसर्वापेक्षयाभ्यर्हितत्वंदर्शयन्नाह॥ असतो
पिनिबन्धेनसतामप्यनिबंधनात् नियमस्यपुरस्कारात्संप्रदायस्त्रिधाकवेः असतोपीतिवस्तुगत्यायन्नभवतितदपिकविभिर्वर्ण्यते॥ यथा॥ र
त्नानिपर्वतमात्रेहंसायत्रजलाशये जलेभायंनभोनद्यामम्भोजाद्यंनदेष्वपि तिमिरस्यतथामुष्टिग्राह्यत्वंसूचिभेद्यता मुक्तत्वंकीर्तिपुण्यादेः

कार्ष्ण्यं च कीर्त्यादिषु प्रतापे रक्तता जलेरक्तत्वं क्रोधरागयोः ज्योत्स्नापाने चकोराणां प्रवालं सर्ववीरुधाम् केसराशोकयोः सत्स्त्रीगण्डूषात्पाद
घातः मासान्तरेष्वपि पुष्पाणि रोमालि त्रिवलिस्थितिम् ॥ सतामपीति पारमार्थिकमपि न निबध्यते ॥ यथा ॥ वसन्ते मालतीपुष्पं फलपुष्पे च चन्दने
कामिदन्तेषु कुन्दानां कुड्मलेषु च रक्ततां नारीणां श्यामतां पातः स्तनयोर्वस्त्रवातयानियमस्येति हिमवत्येव भूर्जत्वक् चन्दनं मलये परम् हेमन्त
शिशिरे पद्मकासदेहाकमलस्थितिः ॥ किंच ॥ सामान्यग्रहणे शौक्ल्यं पुष्पाणां स्रग्यवाससाम् ध्वजचामरहंसानां हारस्फटिकभस्मनोः कृष्णत्वं स
र्पसाद्रिमेघवारिधिपीठभाम् भिल्लकाचासुराणां च धूमपंकशिरोरुहाम् लौहित्यं धातुमाणिक्यजपारत्नविवस्वताम् पद्मपल्लवबन्धूकदा
डिमीकरजादिषु पीतत्वं शालिमण्डूकवल्कलेषु परागके वर्णस्येव शिखिप्रौढिर्माधवे च पिकध्वनिः ॥ अन्यच्च ॥ कमलासम्पदोः कृष्णहरितो
र्नागसर्पयोः पीतलोहितयोः स्वर्णपरागाग्निशिखासु च चन्द्रे शशैणयोः कामध्वजे मकरमत्स्ययोः दानवासुरदैत्यानामैक्यमेवाभिसंहितम्
॥ अपि च ॥ चिरन्तनस्यापि तथा शिवचन्द्रस्य बालता मानवा मौलितो वर्ण्या देवाश्चरणतः पुनः भुवनानि निबध्नीयात्त्रीणि सप्त चतुर्दश चतस्रो
दिशो दश दिशश्चतुरः सप्तवारिधीन् अष्टादश कृतान्विद्याः चतस्रश्च चतुर्दश येऽस्थले ते जले जीवा भिन्दन्त्यर्कं रणे मृताः महत्त्वमादौ सर्गान्ते

सूक्ष्मताजगतामपि शैलादिर्भिद्यते शब्दान्नभः पूर्तिरथोद्गमं नामतस्तद्गुणाधौस्यात्कङ्करोवृषवाहनः चिह्नत्वेनवृषाङ्कोयंध्वजेसत्वाद्वृषध्व
जः शूलीनसर्वगिरिशः शशीनहरिणोविधुः इन्दुमौलिर्महादेवोगंगामौलिर्नतुक्वचित् रलयोर्डलयोश्चैवबवयोः सशयोर्न्नभित् नानुस्वा
रविसर्गौचचित्रभङ्गस्यसम्मतौ इयवद्वाहिहीहस्मउतवैतुकिलैवच पदान्येतानिदेयानिपादस्याद्येनजातुचित् भूतेन्द्रभारतेशास्त्राक्रमह
च्छब्दानिरर्थकः दुरर्थोब्राह्मणोसृष्टिभोज्योपधपयादिषु॥इत्यलंकारशेखरेसंप्रदायरत्नेनियममरीचिः॥अथसंक्षेपेणवर्णनीयमाह॥वर्ण्य
स्वरामादेशोपदेशोग्रामःपुरीसरित् सरोब्धरण्योद्यानाद्रिप्रयाणरणवाजिनः हस्त्यर्कचन्द्राऋतवोविवाहोयस्वयंवरम् सुरापुष्पाम्बुसम्भो
गविप्रलंभमृगयाभ्रमाः कालान्तरंवयः सम्भोगान्तदूत्याभिसारिकाः॥अथैषांविशिष्यवर्णनमाह॥नृपेकीर्तिः प्रतापाज्ञादुष्टशान्तिविवेकिताः
धर्मप्रयाणसंग्रामशस्त्राभ्यासनयक्षमाः प्रजापालारिशैलादिनिवासोरिपुशून्यता औदार्यधैर्यगाम्भीर्यैश्वर्यस्थैर्योद्यमादयः देव्यांसौभाग्यलावण्य
शीलशृङ्गारमन्मथाः त्रपाचातुर्यदाक्षिण्यप्रेममानव्रतादयः देशेबहुखनिद्रव्यपण्यधान्याकरोद्भवाः दुर्गग्रामजनाधिक्यनदीमातृकतादयः
ग्रामेधान्यलताहंससरसीपशुपुष्टयः सेक्यादिकुल्याकेदारग्रामस्त्रीमुग्धविभ्रमाः पुरेदृपरिखावप्रप्रतोलीतोरणध्वजाः प्रासादाध्वप्रपारामवा

अ॰ ३॰ सक्तुप्रपाप्रपालीमृगतृष्णाम्रादिफलपाकाः वर्षासु घनशिखिस्मयहंसगमा पंककंदलोद्भेदौ जातीकदम्बकेतकझञ्झानिलनिम्नगाहलिप्रीतिः शर
२५ दिंदुरविपटुत्वं जलाच्छताऽगस्त्यहंसवृषदर्पाः सप्तच्छदासिताभ्राब्जरुचिः शिखिपक्षमदपाताः हेमंते दिनलघुतामरुबकयवशीतसंपत्तिः॥ शिशि
रे कुन्दसमृद्धिः कमलहतिर्वीगुडामोदाः॥ विवाहे स्नानशुक्लांगभूषातूर्यत्रयीरवाः वेदीसंगीतरामादिलाजमंगलवर्णनम् स्वयंवरे शचीरक्षा म
ञ्चमण्डपसज्जता राजपुत्रीनृपाकारान्वयचेष्टाप्रकाशनम् सुरापाने विकलतास्खलनं वचने गतौ लज्जामानच्युतिप्रेमाधिक्यं रक्ताक्षता
भ्रमः पुष्पावचये पुष्पावचयः पुष्पार्पणार्थने दयिते मालागोत्रस्खलने क्रोधो वक्रोक्तिसंभ्रमाश्लेषाः जलकेलौ सरः क्षोभश्चक्रहंसापस
र्पणम् पद्मम्लानिः पयः सेकोऽक्षिरागोभूषणच्युतिः सुरते सात्त्विका भावाः सीत्काराः कुड्मलाक्षता कांचीकंकणमञ्जीररवो रदनखक्ष
ताः विरहे तापनिश्वासचिंतामौनकृशांगताः अब्दसंख्यानिशादैर्घ्यजागरः शिशिरोष्णता मृगयायां चसंचारो वागुरानीलवेषता मृगाधिक्यं मृ
गत्रासो हिंस्रखेदाक्षत्वगतित्वरा आश्रमे तिथिपूजैणविश्वासो हिंस्रशांतता यज्ञधूमो मुनिसुता द्रुसेको वल्कलं द्रुमाः पद्माकेक्रोशवः प्रातर्मध्या
ह्ने तापसप्लवः सायंसूर्येति लोहित्यं चक्रपद्मादिविप्लवः पूर्वं त्वग्रतनर्क्षैश्च संधिमाप्योपवर्णनम् एवं शेशवतारुण्यमाध्यस्थ्यं विषमं च तत्

अन्धकारेतिकाठिन्यंबिम्बलोपसमर्थता आकस्मिकसमारंभोनिःशंकमभिसारिता रसे प्रचुरशाखत्वंदलादर्शितसूर्यता उच्चताप्रसवोत्कर्षौ वयः पथिकसेव्यता अभिसारेभयभ्रंशोमञ्जीरादितिरस्क्रिया साहसंरागितोत्कर्षा कालानुगुणकल्पता ॥ इत्यलंकारशेखरेवर्णनीयमरीचिः

नियमान्तरमाह ॥ श्वेताभ्रंद्वारयोज्ञेयानीलाः श्रीवैशवादयः शोणास्तुसात्रधर्माद्याः पीतादीपशिखादयः धूसराअथधूल्याद्याः ज्ञातव्याः काम्यवर्त्मनि ॥ अन्येवज्ञातव्यं ॥ श्वेतानिचन्द्रशङ्खाम्बुशंभुनारदभार्गवाः हलीशेषाहिशङ्खैभौसिंहसौधशरद्घनाः सूर्येन्दुकान्तनिर्मोकमन्दारकुहिमाद्रयः हिमहासमृणालानिस्वर्रेण्डेभरदाभ्रकम् सिकतामृतलोध्राणिगुणकैरवशर्कराः नीलानिकृसचन्द्राङ्क-व्यासरामधनंजयाः शनिद्रुपदजाकालीराजपट्टविदूरजम् विषाकाशकुहूशस्त्रागरुपापतमोनिशाः रसाद्भुतशृंगारौतथापिकंचराहवः शिखिचिबंबमोरसः कण्ठः खञ्जनकेकिनोः कृत्याछायागजाङ्कुरः खलान्तःकरणादयः शोणानिसात्रधर्मश्चनेत्रारौद्ररसस्तथा चकोरकोकिलापारावतनेत्रंकपेर्मुखम् तेजः पुषरागमस्तंचभौमकुंकुमतक्षकाः जिह्वेन्द्रगोपखद्योतविद्युत्कुंजरबिंदवः पीतानिदीपजीवेन्द्रगरुडेश्वरसञ्जयाः ब्रह्मावीररसस्वर्णकलिद्वापररोचनाः किंजल्कचक्रवाकाद्याहरितालंमनःशिला धूसराणिरजोलूताकरभोगृहगोधिकाकपोतमूषकोदुर्गाकाककंठखरादयः

अ॰शे॰ इदमुपलक्षणम्॥हरिताः सूर्यतुरगाबुधोमरकतादयः इत्यपिबोद्धव्यम् द्वैरूप्येचाप्रसिद्धोचनियमोयमुदाहृतः अन्यद्वस्तुयथापत्स्यात्तत्तथैवो
२६ पवर्ण्यते॥इत्यलंकारशेखरेमुक्तादिनियममरीचिः इदानींनियमांतरमाह एकस्मादासहस्रंचयद्यद्वस्तुयथाभवेत् तत्तत्कविप्रयोगेनज्ञातव्यं
काव्यमिच्छता॥अत्रैवज्ञातव्यम्॥एकरेन्दुः करीचाम्बोगजास्यरदशुक्रदृक् दर्पंपक्षनदीतीरनरश्रुतिभुजादिकम् त्रयःकालाग्निभुवनगंगा
मार्गेशदृग्गुणाः ग्रीवारेखामहीकोणस्तथाशूलशिखावली संध्यापुनःपुष्कराणिरामविष्णुज्वरांघ्रयः चत्वारिवेदब्रह्मास्यवर्णाब्धिहरिबाह
वः स्वर्द्दंतिदंतसेनांगोपाययामयुगाश्रमाः पंचपांडवरुद्रास्येन्द्रियस्वर्द्रुव्रतादयः महाभूतमहापापमहाकाव्यमहामखाः पुराणलक्षणंप्राण
मिलावर्गेन्द्रियार्थकाः षड्जन्नकोणशिशिरोनेत्रतर्काङ्गदर्शनम् चक्रवर्तीमहासेनवदनानिगुणारसाः सप्तपातालभुवनमुनिद्वीपार्कवाजिनः
वाराश्वस्वरराज्यांगव्रीहिवह्निशिखादयः अष्टौयोगाङ्गवस्वाशामूर्तिदिग्गजसिद्धयः ब्रह्मश्रुतिव्याकरणदिक्पालाहिकुलाद्रयः नवांगद्वार
भूखण्डकृत्तरावणमस्तकाः व्याघ्रीस्तनसुधाकुण्डभृङ्गनादिरसग्रहाः दशहस्तांगुलीशंभुबाहुरावणमौलयः कृष्णावतारोदिग्विश्वेदेवाव
स्थेन्दुवाजिनः एकादशमहादेवाः सेनाक्षकुरुभूपतेः द्वादशार्कराशिमाससंक्रांतिगुहबाहवः शारिकोष्ठकसेनानीनेत्रक्ष्मापतिमंडलाः त्र

षोडशस्युस्तांबूलगुणाअथचतुर्दश विद्यान्वयम्बराश्चैवभुवनध्रुवतारकाः तिथयः स्युः पंचदशषोडशेन्दुकलास्मृताः अष्टादशद्वीपविद्यापु
राणस्मृतिधान्यकम् विंशतीरावणभुजानेत्राद्यथशतंतथा धार्तराष्ट्राः शतभिषकूतारकापुरुषायुषम् रावणांगुल्यब्जदलंयज्ञपत्राब्धियोजन
म् सहस्रंजाह्नवीवक्त्रंशेषशीर्षाम्बुजच्छदाः रविरश्म्यर्जुनकरवेदशाखेन्द्रदृष्टयः उदाहरणमेतेषांप्रसिद्धत्वान्नलिख्यते प्रहतेकेवलंयाथा
मादृशाः काव्यवर्त्मनि॥ इत्यलंकारशेखरेसंख्यानियममरीचिः॥ इदानींप्रकारमुपदिशन्नेवकवीनांप्रकर्षबीजमाह॥ गतागतंसमत्वंचसंस्कृ
तप्राकृतैक्यलाम् तथावचनयोःसाम्यंधर्मिधर्माभिधापिच कवयः कुर्वतेशक्ताः समस्यापूरणादिकम् आदिचतुष्टयंचित्रकाव्योपकारक
म्॥ तद्यथा॥ ममरुरुमध्यमसहासकारिकावरखवनदानवसरसीरसगजभुजगतरुणीहृतरदसोदरनदभेदनवरभैरवकलपुलकपतदात
पद्यस्यादिः चकारादसाम्येकविस्फुटतार्थता राजानदीमालिकाराजतेदीनरक्षीपिनाकिनानन्दनवमसहसात्सनुतद्द्यादिः रेजिरेवभूवतिष्ठती
त्याख्यातेसंस्कृतेत्यादियथा॥ तत्रपुल्लिङ्गे॥ हाराहारविहारसारसमराः संभोगभोगाध्वराः संहारामरवारवारणरणाष्टंहारवीराकराः लोलोल्ला
पविलासवापसहरहंकारहीरांकुरानीहारोरगतारागतरलागोविन्दकन्दोदनाः॥ स्त्रीलिंगे॥ धरणीधारणीगोणीरोहिणीरमणीमणी कंदलीलह

अ.शे. रीरंभानर्ताभेरीवसुंधरा॥नपुंसके॥जलफलपलमूलंयारिकीलालतूलंवलपललदकूलंतिंगगंभीरकूलम् सलिलकपलचीरंतुच्छराजीवनीरंहलरज
२७ तकुटीरंदारुनालंपटीरम् भणगच्छदेहिसंहरकुरुरोचयमारयावगच्छेहि अवलोकयावचिन्तयधारयस्वादयेतिधातुजंविद्धि अेकस्मिन्नेवार्थे
बहुवचनैकवचनयोः॥सामान्ययथा॥ कव्यादोदेषिरोवारिफलिनोवर्हिणोनरः तादृशोभूरुहाद्याप्सुमासफेरवसोमपाः एवंरघ्विमेयानशब्दाःखु
रणशावपः धर्मिधर्माभिधायिपदंयथा सुषिराद्रिप्रतीहारचुल्लपिल्लादिशात्रवः स्मेरालसोमत्सरघ्नधर्मिधर्माभिधायकाः चकारादिविशेषसामान्य
वाचकभावाभाववाचकपरिग्रहः॥ तदुक्तम्॥ शकुन्तधातुमरुतोगरुत्मत्कामदर्शनम् स्वच्छवंधूस्वगमनंचटकाद्याद्विवाचकाः अपिधाना
यपूर्वादिभावाभावप्रदर्शनम् आदिपदात्आराद्युतभिन्नअवतंसादिपरिग्रहः॥इत्यलंकारशेखरेचित्रकाव्योपकारमरीचिः॥ समस्यापूर्ण
त्विकमिति इक्षुकठिनसमस्याभिप्रायेणतदुक्तंकवयः शान्ताः तत्रैवंप्रकारेणयदीदंस्यात्तदेदंस्यात्कर्ताविषयमेतिच अयोग्यः खलुकः शब्दः
कुत्रसंसर्गधीर्नहि प्रश्नोत्तरात्पदेभङ्गात्पूर्वस्मिन्नाद्ययोजनात् मिथ्याभिधाप्यसावेवअेषसार्वत्रिकः क्रमः॥प्रश्नेति॥ केमण्डयन्तिस्तन
मण्डलानिकीदृशपुमांश्चन्द्रमसः कुतः श्रीः किमाहसीतादशकण्ठनीताहारामहादेवरत्नातमातः॥पदेति॥मृगात्सिंहः पलायते मृगमस्तीति

अ०शे० मंथेद्वयंभुवि भुवीत्युभयान्वयी। पातालंवारणैःक्षिप्रेचन्दनद्रुमपन्नगैः ध्वजप्रासादधूलीभिर्भूमिः स्वर्गमुपाययौ श्रीकृष्णस्योद्वरेसर्वसंसर्गः सार्व
२८ कालिकः पातालंभूमिश्चस्वर्गंययावित्यन्वयः अगस्त्यंभोधिपानादिपौराणिककथाशतैः शिवादिदेवसंचारैस्तादृश्यैस्तद्वर्णनम् शिवादीति
यत्रशिवोयातितत्रतन्नान्तरीयकतयासर्पचन्द्रानलादीनामपिगमनमवश्यकमित्यर्थः सादृश्यैरिति लक्षणायास्तुत्र्यग्रेपर्वतद्वयमित्यादौ
औचित्येनसंग्रामेकुम्भिमुक्ताभिर्दिवातारकितंनभः॥राजशेखरस्तु॥उत्पाटितैर्नभोनीतैः शैलैरामूलबन्धनात् तांस्तानर्थान्समालोच्यसम
स्यांपूरयेत्कविरित्याह॥वृद्धास्तु॥कः प्रत्येति प्रत्ती मोनद्राक्प्रत्येमिप्रतीहिच नहिनोतत्किमित्याद्यैरुक्तिमाश्रित्यपूरयेत्॥तथा॥पराजितश्च
द्रगवानजरासंधेनजंतुना प्रतीतिरद्यमेयातामृगात्सिंहः पलायते मासंभावयशल्येनफाल्गुनस्यपराजयम् कः प्रतीयात्कुरुश्रेष्ठमृगात्
सिंहः पलायतेत्यादि नहिगांडीवकोदण्डोमृगादित्यादि तत्किंकमलपत्राक्षमृगात्सिंहः पलायते सुबोधमखिलम् शब्दाक्षुक्लितेसिन्धौ
शैलाण्डारोविदालिते त्वत्प्रतापाद्रवीभूतेस्वर्णाद्रौमलिनेरवौ विरहेसर्वेदहनः संतोषेसर्वमेवशशी कामिनिसर्वकाम्यंशान्तेलोष्टायतेविश्वम्
वैशेषिकेषुकाव्येषुगुणेषूत्कृष्टमन्दयोः अपेक्षयाचतंसर्गेस्यातामुत्कृष्टमन्दते वैशेषिकेषुरूपादिपञ्चसु काव्येशौर्यौदार्यसौन्दर्यादिषु

अपरिकलितकाव्यसरणिर्मीमांसंवशीकर्तुमनतिचिरमनुसरन्कविः अन्वयैरजहल्लिंगैः साधारणविशेषणैः छन्दोज्ञात्वापृथग्वाक्यैः स्वबुध्यामान
सीमयेत् समस्यापदंवाक्यंसमर्तव्यम् शिशूनांगतयेऽस्माभिर्दिङ्मात्रमिहदर्शितम् काव्यकान्तारपान्थानामीदृगर्थैकियान्श्रमः॥ इत्यलंका
रशेखरे कविसामर्थ्यरत्नम्॥ रसआत्मेत्युक्तम् तत्रयथात्मानंविनाशरीरमप्रयोजकम् तथारसंविनाकाव्यम् तथाह साधुपाकेप्यनास्वाद्यंभो
ज्यंनिर्लवणंयथा तथैवनीरसंकाव्यंनस्याद्रसिकतुष्टये तत्ररसत्वमंगांगिभावापन्नसकलविभावादिसाक्षात्कारकत्वम् विशेषणसमूहालं
कनकारणापरसत्वजपिजातिरितिवयम्॥ केचित्तु॥ कारणेनाथकार्येणसहकारिभिरेवच व्यक्तत्वंनीयमानस्तुस्थायीभावोरसः स्मृतः कारण
मंगनानवयौवनादि कार्याणि स्तंभः स्वेदोथरोमाञ्चः स्वरभङ्गोथवेपथुः वैवर्ण्यमश्रुप्रलयावित्यष्टौसात्विकामताः सहकारिणउद्यानादयः ग्ला
न्यादयः॥ यदाहुः॥ विभावैरनुभावैश्चसात्विकैर्व्यभिचारिभिः आरोप्यमाणउत्कर्षंस्थायीभावोरसः स्मृतः॥ तमिदानींविभजते॥ शृंगारहास्य
करुणरौद्रवीरभयानकाः बीभत्साद्भुतशान्ताश्चकाव्येनवरसाः स्मृताः भक्तिप्रमुखस्तुसुखज्ञानात्मरसवादिमतेनभवत्येवेतिदिक्॥ तत्रशृं
गारंविभजते॥ संभोगोविप्रलंभश्चशृङ्गारोद्विविधः स्मृतः तत्रस्त्रीपुंसलक्षणेदृष्टप्राप्तौरतिरेवसंभोगः॥ तदुक्तम्॥ अनुरक्तौनिषेवेतांयत्रान्योन्यं

अ॰रं॰ विलासिनी दर्शनस्पर्शनादीनि संभोगोयमुदाहृतः तत्रनायिकाग्रपसंभोगो यथा॥ शून्यंवासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैर्निद्राव्याज
२९ मुपागतस्यसुचिरंनिर्वर्ण्यपत्युर्मुखम् विस्रब्धम्परिचुम्ब्यजातपुलकामालोक्यगंडस्थलींलज्जानम्रमुखीप्रियेणहसताबालाचिरंचुंबिता आलो
कानमनुसीत्यन्वयः॥ नायिकाचतुर्धा॥ अनूढा च स्वकीया च परकीया वराङ्गना त्रिवर्णिनः स्वकीयास्याद्न्याः केवलकामिनः॥ तत्र॥ अनुरक्ता
गुरुलोकेनसमंपाणीकृताभवेत् सानूढेतियथाराज्ञोदुष्यन्तस्यशकुन्तला देवतागुरुसाक्ष्येणस्वीकृतास्वीयनायिका परकीयाप्यनूढैवविशेष
स्तुस्फुटस्तयोः सामान्यवनितावेश्याभवेत्कपटपण्डिता नहिकश्चित्प्रियस्तस्यादातारंनायकंविना अस्याः प्रकाशोऽन्यासांप्रच्छन्नोरमण
वृत्तिविशेषः ताश्चाष्टधा खण्डितोत्कण्ठिताप्रोषितपतिकाचाभिसारिका कलहान्तरितावासकसज्जाविप्रलब्धिका स्वाधीनभर्तृकाचान्याश्चेत
लोम्यष्टधामताः नायिकाग्रयोयथा॥ त्वंमुग्धाक्षिविनैवकञ्चुलिकयाधत्सेमनोहारिणींलक्ष्मीमित्यभिधायिनिप्रियतमेतद्वीटिकांसंस्पृशि शा
य्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितोनिर्यातः शनकैरलीकवचनोपन्यासमालीजनः रूपसौभाग्यसंपन्नः कुलीनः कुशलोयुवा॥
श्रुतज्ञस्सरलस्तथानायकः प्रीतयेस्त्रियाः अयंबहुप्रकारोपिसंक्षेपेणचतुर्विधः॥ अनुकूलोदक्षिणश्चशठधृष्टौचतेयथा लीनरागोनुकूलः

स्यादन्यत्र मनोहरः दक्षिणस्त्वन्यचित्तोपियः स्यादविकृतः स्त्रियाम् प्रियंवक्त्यप्रियंतस्याः कुर्वन्नविकृतीशठः धृष्टोज्ञातापराधोपिनविल
क्षोवमानितः॥विप्रलम्भस्तु॥भावोयत्ररतिर्नामप्रकर्ष मभिगच्छति नाधिगच्छतिचाभीष्टं विप्रलंभः सउच्यते अभीष्टंस्त्रीपुंसलक्षणमेव स
चपूर्वानुरागमानप्रवासःकरुणात्मकः विप्रलम्भश्चतुर्धास्यात्पूर्वपूर्वोह्ययंगुरुः॥तत्र॥स्त्रीपुंसयोर्नवालोकादेवोल्लसितरागयोः ज्ञेयः पूर्वा
नुरागोयमन्यभावरतिकामयोः॥यथा प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदयास्तास्तामुग्धदृशोनिसर्गमधुराश्चेष्टाभवेयुर्म
यि यास्वन्तः करणस्यबाह्यकरणव्यापाररोधीक्षणादाशंसापरिकल्पितास्वपिभवत्यानंदसान्द्रोलयः अथान्यावनिताशक्तमवगम्यस्ववल्ल
भम् ईर्ष्यावशेनवैमुख्यमेषमानउदाहृतः॥यथा॥सापत्युः प्रथमापराधसमयेसख्योपदेशंविनानोजानातिसविभ्रमाङ्ग-वलनावक्रो
क्तिसंसूचनम् स्वच्छैरच्छकपोलमूलगलितैः पर्य्यस्तनेत्रोत्पलावालाकेवलमेवरोदितिलुठल्लोलालकैरश्रुभिः प्रवासः परदेशस्थेद्वितीये
विरहोद्भवः यथा॥त्वामालिख्यप्रणयकुपितांधातुरागैः शिलायामात्मानंतेचरणपतितंयावदिच्छामिकर्त्तुम् अस्रैस्तावन्मुहुरुपचितैर्दृष्टि
रालुप्यतेमेक्रूरस्तस्मिन्नपिनसहतेसंगमंनौकृतान्तः॥इत्यादि॥स्यादेकतरपंचत्वेदंपत्योरनुरक्तयोः शृङ्गारः करुणाख्योयमजस्येवरतेरि

अ०शे० व नंनुशृङ्गारस्यरतिप्रकृतित्वात्तस्याश्चसुखसंवेदनरूपत्वात्तस्यचविप्रलंभेऽभावात्कथंशृङ्गारभेदइतिचेन्नधन्योहमस्याः कृतेदशामि
३० मामनुभवामिइतितत्रापितदभिधानात् कश्चित्संभोगपोषकत्वेनस्पृहणीयत्वाद्योतितंविस्तृतंमयैववाक्यरत्ने॥श्रीपादस्तु॥रतिर्भवतिदेवा
दौमुनौपुत्रेनृपेगुरौ शृङ्गारस्तुभवेत्सैवयाकान्ताविषयारतिः॥तत्रदेवेयथा॥कण्ठकोणविनिविष्टमीशतेकालकूटमपितेमहामृतम् अप्यु
पात्तममृतंभवद्वपुर्भेदवृत्तियदियेनरोचते॥मुनौयथा॥हरत्यघंसंप्रतिहेतुरेष्यतः शुभस्यपूर्वाचरितैः कृतंशुभैः शरीरभाजांभवदीयदर्श
नंव्यनक्तिकालत्रितयेपियोग्यताम्॥पुत्रे॥एह्येहिवत्सरघुनंदनपूर्णचंद्रचुंबामिमूर्द्धिसुचिरंचपरिषजेत्वाम् आरोप्यवाहृदिदिवानिश
मुद्वहामिवन्देथवाचरणपुष्करकंद्वयंते॥नृपेयथा॥तेकौपीनधनास्तएवहिपरंधात्रीफलंभुंजतेतेषांद्वारिमदन्तिवाजिनिवहास्तैरेवलब्धा
क्षितिः यैरेतत्समलंकृतंनिजकुलंकिंवाबहुब्रूमहेयेदृष्टाः परमेश्वरेणभवतातुष्टेनरुष्टेनवा॥गुरौयथा॥हातातविश्वजनवत्सलमामकी
नजीवितधनद्युमणिवंशवतंसभूत स्यांचेद्भवत्कुलजसद्मनिचेटकः स्यांयद्वाभवच्चरणपंकजरेणुरेव हासमूलः समाख्यातोहास्यनामार
सोबुधैः चेष्टाङ्गवेषवैकृत्याद्धास्योहासस्यचोद्भवः कपोलाक्षिकृतोल्लासोभिन्नोष्ठः समहात्मनाम् विदीर्णास्यश्चमध्यानामधमानांसशब्द

कः॥ यथा॥ मयुत्संकमितिप्रात्यायप्रियायैप्रेषितमनः तत्वतन्नैवरमतेहताः पाणिनिनावयम् शोकोत्थः करुणोज्ञेयस्तत्रभूयात्तुरोदनं वैवर्ण्य
मोहनिर्वेदप्रलयादृत्सिक्यभिवेत्॥ यथा॥ मदेकपुत्राजननीजरातुरानवप्रसूतिर्वरटातपस्विनी गतिस्तयोरेषजनस्तमर्दयन्नहोविधेत्वांकरु
णाऽरुणद्विमो क्रोधात्मकोभवेद्रौद्रः क्रोधः प्रोक्तोचवैरिणः भीष्मवृत्तिरसामान्योभवेदुग्रक्रियाश्रयः स्वांसघातस्वयंशस्त्रोत्क्षेपभ्रुकुटयस्त
था अन्यासातिजनाक्षेपोस्खलनंचोपवर्ण्यते॥ यथा॥ कृतमनुमतंदृष्टंवायैरिदंगुरुपातकंमनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः नरकरिपु
णासार्द्धंतेषांसभीमकिरीटिनामयमहमसृङ्मेदोमांसैः करोमिदिशांबलिम् उत्साहात्माभवेद्वीरोबलशक्त्याश्रयश्चसः नायकोत्रभवेद्वैर्यै
श्लाघ्यैरभिमतैर्गुणैः॥ यथा॥ क्षुद्राः संत्रासमेतेविजहतहरयोभिन्नशक्रेभकुंभायुष्मद्गात्रेषुलज्जान्दधतिपरममीसायकानिष्पतन्तः सौ
मित्रेतिष्ठपात्रंत्वमसिनहिरुषांनन्वहंमेघनादः किंचिद्भ्रूभङ्गलीलानियमितजलधिंराममन्वेषयामि भयानकोभवेद्भीतिप्रकृतिर्घोरव
स्तुनः सचप्रायेणवनितानीचबालेषुदृश्यते दिगालोकास्यशोषाङ्गकम्पगद्गदसंभ्रमाः स्तंभवैवर्ण्यमोहाश्चवर्ण्यन्तेविबुधैरिह॥ यथा॥
ग्रीवाभङ्गाभिराममुहुरनुपतितिस्यन्दनेदत्तदृष्टिः पश्चार्द्धेनप्रविष्टः शरपतनभयाद्भूयसापूर्वकायम् शष्पैरर्द्धावलीढैः श्रमविवृ

वित् शान्तोकरुणबीभत्सौ नाङ्गी शिवाद्भुतः शृङ्गारो वीरकरुणौ हास्यभयानकयोरिपुः अत्रकरुणबीभत्सयोर्मैत्रीविशेषाभिप्रायेणस्मर्तव्यम् ॥
स्थायिभावस्वरूपमाह रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा जुगुप्साविस्मयोभावानिर्वेदः स्थायिनोनव स्थायिनोभावानवेत्यर्थः
ननुनिर्वेदस्यकथं शान्तरसस्थायित्वमभिचारित्वमिति चेन्न अधिकरणभेदेनोभयाविरोधादित्यन्यत्रविस्तरः स्थायिलक्षणंतु विरुद्धैरविरुद्धै
र्वाभावैर्विच्छिद्यतेनयः आत्मभावंनयत्यन्यान्स्थायीभावः सउच्यते यथालवणाकरः विरुद्धैर्जुगुप्सादिभिरविरुद्धैरत्यादिभिर्योनविच्छिद्यते
॥ विशेषलक्षणं तु ॥ मनोनुकूलविषयसुखात्मकं संवेदनंरतिः अङ्गक्रीडादिभिश्चेतोविकारोहासः इष्टनाशादिजनितंचित्तवैक्लव्यंशोकः प्र
तिकूलेषुतैक्ष्ण्यप्रबोधः क्रोधः कार्यारंभेस्थिरसंरंभउत्साहः व्याघ्रादिदर्शनादिजनितंमनः क्लैव्यंभयम् दोषदर्शनात्पदार्थेगर्हणंजुगुप्सा लो
कसीमातिक्रान्तपदार्थविषयश्चित्तविकारोविस्मयः तत्त्वज्ञानादीर्ष्यादिभिः स्वावमाननंनिर्वेदः एतेचसर्वभावेषुमुख्याः यदाह ॥ यथानराणां
नृपतिः शिष्याणांचयथागुरुः तथासर्वेषुभावेषुस्थायीभावः स्मृतोमहान् विभावोद्विविधः उद्दीपनआलंबनश्च तत्रकोकिलवसन्तादिरुद्दीप
नः नायिकादिरालंबनः येत्वाहुः अस्माकंमतेरत्यादिकमनुभावत्वादिकंजातिरेव नहिवैशेषिकादिवदस्मत्प्रक्रियेति ॥ अनुभावलक्षण

अ॰शे॰ न्तु॥ अनुभावो विकारस्तु भावसंसूचनात्मकः॥ तत्र॥ हेलाविच्छित्तिबिब्बोककिलकिंचितविभ्रमाः लीलाविलासौ हावश्च विक्षेपो विहृतं मदः
३२ मोट्टायितं कुट्टमितं मौग्ध्यं च तपनं तथा ललितं चेत्यमी हावाश्चेष्टाः शृङ्गारभावजाः एतच्चास्माभिरेव प्रपंचितमन्यत्र॥ सात्विकलक्षन्तु॥
विशेषेणाभितः कायें स्थायिनं भावयन्ति ये अनुभूतादिहेतूंस्तान्वदन्ति व्यभिचारिणः आदिपदात्स्वेदादिपरिग्रहः तेच निर्वेदग्लानिशं
कास्यास्तथासूयामदश्रमाः आलस्यं चैव दैन्यं च चिंतामोहस्मृतिर्धृतिः व्रीडाचपलताहर्षश्चावेगोजडतातथा गर्वोविषाद औत्सुक्यं निद्राप
स्मार एव च सुप्तं विबोधोमर्षश्चाप्यवहित्थमथोग्रता मतिर्व्याधिस्तथोन्मादस्तथामरणमेव च त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः अमी
च प्रत्येकं भाव्यते क्वचित्सर्वभावतापि यथा क्वाकार्यं शशलक्ष्मणः इत्यादौ अत्र क्वाकार्यमिति वितर्कः भूयोपि दृश्येतेत्यौत्सुक्यम् दोषाणा
मितिमतिः कोपेपीतिस्मृतिः किंवक्ष्यन्तीतिशंकास्वप्नेपिसादुर्लभेतिदैन्यम् चेतः स्वास्थ्यमुपेहीति धृतिः कः खल्वित्यादिचिन्ता॥ इत्यलंका
रशेखरे रसमरीचिः॥ परे रसदोषाभावानुकूलवर्णादयः काव्यशरीरमनइत्युक्तमतो रसदोषानिदानीमाह॥ स्वस्वशब्दैरुपादानं भावस्य वा रस
स्य च कष्टप्रकल्पनीयत्वः मनुभावविभावयोः प्रकृतेरसवैरित्वन्तेषाम्भक्तिविपर्ययः अनौचितीच सर्वत्र रसे दोषाः स्युरीदृशाः सामान्यतो

विशेषतो वा स्वस्ववाचकशब्दप्रतिपादकानां निर्वेदादीनां रत्यादीनां वा रसाननुगुणत्वमिति सकलानुभवसिद्धं॥ तत्र व्यभिचारिणः स्वस्वशब्दोपा
त्तत्वम् यथा॥ सव्रीडा दयितानने सकरुणा मातङ्गचर्म्माम्बरे सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि सेर्ष्या जह्नुसुतावलोकनविधौ दीना
कपालोदरे पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः सव्रीडा नयननिपातनात् अत्र व्रीडादीनां स्वस्वभावप्रतिपादितानाञ्चमत्कारज
नकत्वस्य सहृदयसाक्षिकतया तदभावे रसभंग इत्युचितम् एतदेव प्रत्युदाहरणं प्रतिपादयन्ति ध्यानम्रा दयितानने मुकुलिता मातङ्गचर्म्मा
म्बरे सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यंदिनि मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदर इत्यादि॥ स्थायिनो यथा॥ संप्रहारैः प्र
हरणैः सहाराणां परस्परम् झणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् संप्रहारः संग्रामः अत्रोत्साहस्य रसस्य रसशब्दस्य प्रतिपादित
स्य रसाजनकत्वम् यथा॥ तामनङ्गजयमंगलश्रियं किंचिदुच्चभुजमूलशोभिनीम् नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः शृ
ङ्गारितप्रतिपादितस्य यथा॥ आलोककोमलकपोलतलाभिषिक्तव्यक्तानुरागसुभगामभिराममूर्तिम् पश्यैष बाल्यमतिवृत्य विवर्तमा
नशृङ्गारसीमनि तरङ्गितमातनोति॥ अनुभावस्य कष्टकल्पनीयत्वं यथा॥ कर्पूरधूलिधवलद्युतिपूरधौतदिङ्मण्डले शिशिररोचिषि तस्य यू

अ०शे० नः लीलाशिरोंऽशुकनिवेशविशेषक्लृप्तिर्व्यक्तस्तनोन्नतिरभून्नयनावनौसा अत्रचन्द्रोदयउद्दीपनविभावाः शृङ्गारयोग्यानुभावप्रतीत्यस्वा
३२ वनायसमर्थैवशालिनः स्थिताः यद्यप्यंशुकनिवेशोऽनुभावत्वयोग्यस्तथापितस्यनव्यक्तिप्रयोजकत्वेनोपादानादनुभावत्वापर्य्यवसानम्॥य
द्यप्युन्नतिरप्येवंशृङ्गारंप्रतिपिपादयिषतः अभून्नयनावनौसेत्यनेनतस्यैवालम्बनत्वप्रतिपादनात् नचपुंसिकश्चिदनुभावउपात्तः नच
विभावैराक्षेपोऽपिदुर्विकटेनकल्पनीयः॥विभावस्ययथा॥ परिहरतिरतिं मतिंलुनीतेस्खलतितरांपरिवर्ततेचभूयः इतिवतविषमादशास्य
देहंपरिभवतिप्रसभंकिमत्रकुर्मः इत्यनेनप्रकारेणास्यदशादेहंपरिभवतीत्यन्वयः अत्ररतिपरिहारादीनामनुभावानांकरुणादावपि
संभवनात्कामिनीरूपोविभावोऽप्यत्रप्रतिपाद्यः प्रकरणादिसापेक्षत्वात्॥प्रकृतरसविरोधिविषयकोविभावादिः॥तत्रविभावव्यभिचा
रिणामुदाहरणम्यथा॥प्रसादेवर्त्तस्वप्रकटयमुदंसंत्यजरुषंप्रियेशुष्यन्त्यंगान्यमृतमिवतेसिञ्चतुवचः निधानंसौख्यानांक्षणमभिमुखं
स्थापयमुखंनमुग्धेप्रत्येतुंप्रभवतिगतः कालहरिणः अत्रशृङ्गारेप्रतिकूलस्यशान्तस्यानित्यताप्रकाशनरूपोऽनुभावः तत्रप्रकाशितोनिर्वेदस्य
व्यभिचारिसूक्तियुक्तेः शान्तेनिर्वेदस्यस्थायित्वात्॥व्यक्तिविपर्य्ययइतिपद्यांशोपदूर्णनमनुचितंचेति॥तत्रतद्दूर्णनम्॥व्यक्तयोदिव्याः अदिव्या

दिव्यादिव्याश्च तत्रदिव्यत्वममर्त्यैकरूपकतायथा॥ शिवादेः शेषादेः अदिव्यत्वंयथामाधवादेः दिव्यादिव्यत्वंश्रीकृलादेः त्रिविधा अप्येतास्त्वतु
र्विधा भवन्ति वीररौद्रशृंगारशांतरसप्रधानाः धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्ताः यथा॥ रामभार्गवश्रीकृष्णजीमूतवाहनाः एतेचोत्त
ममध्यमाधमभेदाद्बहवोभवन्तितत्रस्वः पातालगमनसमुद्राद्युल्लङ्घनपर्वतस्फोटनाद्युत्साहोदिव्येष्वेववर्णनीयः अदिव्येषुतु यावदेवलो
कप्रसिद्धमुचितं तावदेववर्णनीयम् अनौचितीचमहान् सदोषः सचभवानीशंकरादीनांपित्रोर्वाकेलिवर्णनम् अस्युक्तिर्वानभःस्पर्शस्त
नास्पृशित्यनौचिती इत्यनेनाःस्तिवर्णनम् यद्यपिकुमारसम्भवेकालिदासेनवर्णितम् तथाप्यर्वाचीनैर्नकर्तव्यम् नहिगजादीनामुदर्य्ये
स्तेजोयटकाष्ठमशितेपचतीत्यस्मदादीनामुदर्य्येणतैजसातथाभवितव्यमितिन्यायात् तस्यापिदोषत्वाद्वादोषान्वक्तुम्वदन्ति दोषेष्व
तिविवेकोमुकविलोकविलोचने काव्यमीमांसिकप्राप्तमहिमामहिमाहतः॥ यदाहमहिमा॥ अनौचित्यादृतेनान्यद्रसभंगस्यकारण
म् प्रसिद्धौचित्यमूलाहिरसस्योपनिषत्परा ईदृशइत्यनेनान्येनौचित्यहेतवोदोषाभवन्तीतिदर्शितम्॥ यथा॥ नायिकायामानादिनाच
रणप्रहारादिनावानायकस्यान्यन्तिककोपादिवर्णनम् व्यक्तिविपर्ययानौचित्ययोरवान्तरभेदविवक्षयाभेदः अमीषांक्वचिद्दोष

अ०७ तापि यत्रनरसहानिर्भवतितद्यथासहृदयैरेवपर्य्यालोचनीयमिति ग्रंथगौरवभयान्नेहतन्यतइति॥इतिश्रीमाणिक्यचन्द्रविरचितेलंका
३४ रशेखरेरसदोषमरीचिः॥उद्दामावीररौद्राद्दौकंदोरीत्यात्वरादयः हृद्याः शृङ्गारहास्यादौपरयोर्मध्यमागतिः इदानीमनुकूलान्वर्णनीयाना
हृ शैयादावित्यादिपदेनभयानकस्यहास्यादावितत्रकरुणस्यपरिग्रहः परयोर्वीभत्साद्भुतयोः शान्तस्यनियमोनास्तीतिहृदयम्॥उद्दामेतिच
न्स्ठंडकहंसिन्नघरादिरीतिर्गौडी असरेषुश्रीपादः उद्दामाः स्वान्तरालेनसजातीयेतरेणच योगायाश्चैवचत्वारः शेषाविकटगुम्फना हृद्या
उपेन्द्रादिकंददृहरीतिर्वैदर्भीअसरेषुपुनः स्तुएवं नसोचलध्वन्तरीतीनश्चोपर्य्यनुनासिकः असमासोप्यसोल्पोवाहृद्यंस्यात्तंधिसोस्वव
त्वयथा॥अनङ्गरङ्गप्रतिमंपदङ्गभङ्गीभिरङ्गीकृतमानताङ्गाकुर्वंतिपूनांसहसायथैतास्वान्तानिशान्तापरचिन्तितानि अत्रवैपरीत्यंदोष
येतिमनसिकृत्वाक्वचिददोषतामाह वक्तृवाच्यप्रबन्धानामौचित्येनक्वचित्क्वचित् रचनावृत्तिवर्णानामन्यथात्वमपीष्यते॥यथा॥मन्थायस्त
र्णवाम्भः स्थितकुहरचलन्मन्दरध्वानधीरः कोणाघातेषुगर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः कृष्णाक्रोधाग्रदूतः कुरुशतनिधनोत्पातनि
र्घातवातः केनास्मत्सिंहनादप्रतिरसितमुखोदुंदुभिस्ताडितोयम् भेरीशतसहस्राणिढक्काशतशतानिचएकदायत्रहन्यन्तेकोणाघातः सउ

च्यतेअत्रहिवाच्यमुद्दामप्रबंधत्वात् प्रबंधस्याभिनेयत्वान्नतथा किन्तुवक्ताभीमसेनइति तदौचित्यादुद्दामावर्णाद्यः क्वचिद्वाच्यौचित्यात्
यथाशंकुव्याकीर्णरङ्कुद्रुतनिशितशरक्षुण्णदीव्यत्तरक्षुज्याघोषक्षुब्धकण्ठीरवरवचकितव्यस्तमातंगयूथम् खड्गव्यालूनखड्गंतुमुलकल
कलप्रान्तकूजच्छकुन्तेभल्लध्वस्ताच्छभल्लंवनभुविमृगयाकर्मतेनप्रतेने अत्रहिवाच्यस्यसर्वप्राणिविप्लवात्मकमृगययाएवतथात्वात्त
स्वम् क्वचित्प्रबंधौचित्यात्॥यथा॥कादम्बर्यादौशृङ्गारेपिनमसृणावर्णाइतिदिक्॥सर्वसाधारणंदोषमाह॥गृहीतमुक्तकोनेष्टोहरवाण
मरीचिता मात्राभेदोप्यतः स्याच्चः पदेप्येषशुभावहः एकस्यपदस्यशेषेयोवर्णः सोपरस्याद्येनदीयते यथा॥नाककलाहकाररेफवकार
गौसुतराम्॥यथा॥प्रवाहहरितादूर्वाविवाहरसितंतथा स्फूर्जत्कावचयाभूमिर्भूयः पुण्यैरवाप्यते मात्राभेदेपिस्वल्पोदोष नाककादम्बि
नी पदेत्वेणनदोषः किन्तुगुणः॥यथा॥वन्दामहेमहेशानइत्यादौ अन्यदप्याह रलयोश्चचवर्णस्पर्शौयिल्पायैवभूरितारेफलकारचवर्ग
णांभूयस्त्वंशैथिल्यहेतुतयारसहानिकरमित्यर्थः॥संधौवर्णदोषमाह॥रसहास्तादतिहृद्येनमशरह्रा हाहकारश्चकचतपशराशकव
रादधरादेस्यापभूयसंयोगः तात्सकारात् कात्ककारात् अधराअधोवर्त्तिनः अतिहृद्ययोःशृंगारहास्ययोः रसयोर्दोषायभवन्ति शब्द

अ॰शे॰ दीपकस्यान्वयबोधविरोधिता अस्यतुतस्मिन्नपिरसहानिरितिविशेषः अनैकान्तिकबाधयोरिवानुमितौ अेतद्भिन्नेतरद्वितिरहस्यम् भू

३५ यसांवर्णानांयोगः कार्क्यादिपदे श्रुतिमेवान्यथाकारमक्षराणिकियन्त्यपि काव्यालंकारविद्याभ्यासोद्योदनिरसूत्रपत् उपक्रमोदोषगुणा

लंकारो वर्णकः संप्रदायः कवेस्तस्यसमर्थ्यमप्यविभ्रमः अष्टौरत्नानिदीप्तानिसंत्यलंकारशेखरे चत्वारः स्युरलंकारेसंप्रदायमरीच

यः सामर्थ्येद्वौपरस्मिंस्तुपंचकेस्युस्त्रयः मामकीनांकृतिमिमांद्वेषतोदूषयन्तिये काव्यवार्तानजानन्तितेनूनंपांशुलाः स्मृताः आस्तेयद्यपि

पूर्वपण्डितकृतव्याख्यैवसंख्यावतामानन्दायतथापिकेशवकवेर्वाचामियंगुम्फना व्याख्यासोष्टवशब्दलाघवमिथः सम्बन्धपूर्वापरप्रत्य

यप्रतिबंधनिर्मलगुणाः कुत्राप्यलोलभ्यताम् तर्कप्रौढमतिः प्रशस्तकवितावल्लीवसन्तोत्सवः कोप्यव्याकरणप्रपंचचतुरोऽलङ्कनरपा

रङ्गमः ॥ श्रीमत्केशवमिश्रमद्भुतगुणाधार्संनियुज्यस्वयंचक्रेशक्रसमप्रबन्धममलेमाणिक्यचन्द्रोनृपः ॥ इतिश्रीमन्महाराजमाणिक्यचन्द्र

कारितकेशवमिश्रकृतोलंकारशेखरेविश्रामरत्नम् ॥ शास्त्रयागोकुलचन्द्रस्यश्रीमन्नालालशर्मणा ॥ पत्तलाशुद्धमयंप्रापिशिलावर्णैः सुशोधितैः

श्रीमद्द्विजवरकमलदिवाकरेणगणेशशर्मणाशोधितोयम् मानमंदिरसन्निधौवाराणसीसंस्कृतयन्त्रालयेऽलंकारशेखराख्यो ग्रन्थोमुद्रितः संवत् १९२२ ॥

अ॰शे॰सू॰
३८

अ॰शेषू ३९

